उक्तवातव्याधिचिकित्सामाह—

**सामान्यवातरोगाणां या चिकित्सा प्रवक्ष्यते। एषां सा तु विधातव्या तयैते यान्ति संक्षयम्॥**

और सामान्य वातरोगों की जो चिकित्सायें कही गई हैं 'ह्रस्वकेशत्व', इत्यादि रोगों की शान्ति के लिये भी उन्हीं चिकित्साओं का प्रयोग करना चाहिये। इससे वे रोग नष्ट हो जाते हैं॥ २२०॥

अन्यप्रकारेण वातव्याधिं निरूपयन्नाह—

**एवंविधानि रूपाणि करोति कुपितोऽनिलः। हेतुस्थानविशेषेण भवेद्रोगविशेषकृत्॥२२१॥**

***एवंविधानि रूपाणि शिरोग्रहादीनि, अशीतिः। हेत्विस्त्यादिहेतुविशेषः पित्तश्लेष्माद्यावृतत्वादिः। यथा श्लेष्मावृतो वायुर्मन्यास्तम्भं करोति। स्थानविशेषः कोष्ठादिः। यथा—**

**'तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः'॥ २॥ इत्यादि॥ २२१॥**

प्रकुपित वात इस प्रकार शिरोग्रह इत्यादि ८० रूपों को उत्पन्न करता है। हेतुओं तथा स्थानों की विशेषता से वातव्याधियों की विशेषता का विवेचन कर लेना चाहिये। हेतु की विशेषता से जैसे–कफावृत वायु मन्यास्तम्भ को उत्पन्न कर देता है, और स्थान की विशेषता से जैसे–कोष्ठाश्रित वात के दुष्ट हो जाने पर मूत्र तथा मल का अवरोध हो जाता है॥ २॥ इत्यादि॥ २२१॥

हेतुविशेषेण वातव्याधिविशेषानाह—

**उदाने पित्तसंयुक्ते दाहो मूर्च्छा भ्रमः क्लमः। अस्वेदहर्षौ मन्दाग्निः शीतता च कफावृते॥**

कण्ठ में रहने वाले उदान वायु के पित्तसंयुक्त होने पर दाह, मूर्च्छा, भ्रम तथा ग्लानि होती है तथा कफ से आवृत होने पर अस्वेद, रोमाञ्च, अग्निमान्द्य तथा शैत्य होता है॥ २२२॥

**प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते। दौर्बल्यं सदनं तन्द्रा वैरस्यञ्च कफावृते॥ २२३॥**

***प्राणो=हृदयाश्रयो वायुः॥ २२३॥**

हृदय में रहने वाले प्राणवायु के पित्त से आवृत होने पर वमन तथा दाह उत्पन्न होता है। तथा कफावृत होने पर दुर्बलता, ग्लानि, तन्द्रा और वैरस्य-उत्पन्न होता है॥ २२३॥

**स्वेदो दाहस्तृषा मूर्च्छा समाने पित्तसंयुते। कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते॥२२४॥**

***कफेन संयुक्ते। समाने विण्मूत्रे, सक्ते=अवरुद्धे भवतः। गात्रहर्षो=रोमाञ्चः॥२२४॥**

समान वायु के पित्त संयुक्त होने पर स्वेद, दाह, तृष्णा तथा मूर्च्छा उत्पन्न होती हैं और कफ से युक्त होने पर मल तथा मूत्र का अवरोध और रोमाञ्च होता है॥ २२४॥

**अपाने पित्तसंयुक्ते दाहौष्ण्यं रक्तमूत्रता। अधःकाये गुरुत्वञ्च शीतता च कफावृते॥ २२५॥**

***अत्र गुदाश्रयोऽपानः॥ २२५॥**

गुदा में रहने वाले अपान वायु के पित्त संयुक्त होने पर दाह, उष्णता तथा रक्तमूत्रता उत्पन्न होती है और कफ से आवृत होने पर शरीर के निचले भाग में गुरुता तथा शीतलता होती है॥

**व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः। स्तम्भोऽथ दण्डकश्चापि शूलशोथौ कफावृते॥**

***दण्डकः=आक्षेपकभेदः॥ २२६॥**

सम्पूर्ण शरीर में रहने वाले व्यान वायु के पित्तावृत होने पर दाह, गात्रविक्षेपण तथा ग्लानि होती है और कफावृत होने पर स्तम्भ, दण्डकाक्षेप, शूल तथा शोथ ये लक्षण होते हैं॥ २२६॥

तेषां चिकित्सामाह—

**वाते सपित्ते कुर्वीत वातपित्तहरीः क्रियाः। सकफे तत्र कुर्वीत वातश्लेष्महरीं क्रियाम्॥**

वात के पित्तसंयुक्त होने पर वात तथा पित्त को नष्ट करने वाली चिकित्सा करनी चाहिये। तथा कफयुक्त होने पर वात तथा कफनाशक चिकित्सा करनी चाहिये॥ २२७॥

रसादिधातुगतवायूनां लक्षणान्याह—

**त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते। आतन्यते सरागा च सर्वरुक्त्वग्गतेऽनिले॥**

***सर्वरुक्=सप्तत्वग्व्यथा। त्वग्गते=त्वक्छब्देनात्र रस उच्यते त्वगाधार्यत्वात्तेन रसगत इत्यर्थः॥ २२८॥**

वायु के रस में चले जाने पर चमड़ा-रूक्ष, फटा हुआ, सुप्त, पतला, काला, सुई चुभाने के समान पीड़ायुक्त, तना हुआ और लालिमायुक्त होता है और सम्पूर्ण त्वचाओं ( सात प्रकार की त्वचा होती है ) में पीड़ा होती है॥ २२८॥

मूल श्लोक में 'त्वग्गते' यह जो शब्द आता है, यहां पर त्वक् शब्द से रस लिया जाता है क्योंकि रस का आधार त्वचा ही है॥ २२८॥

**रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः। गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले॥**

***अरूंषि = व्रणानि। भुक्तस्य = भुक्तेत्यत्राध्यवसितादित्वात् कर्त्तरि क्तः, तेन भुक्तवतः। स्तम्भः सन्तर्पणेन रक्तवृद्धेः॥ २२९॥**

रक्तगत वात में तीव्र पीड़ा, सन्ताप, शरीर के वर्ण की विकृति, कृशता तथा अरुचि उत्पन्न हो जाती है। शरीर में व्रण हो जाते हैं और भोजन करने के पश्चात् सन्तर्पण से रक्त की वृद्धि से स्तब्धता होती है॥ २२९॥

**गुर्वङ्गं तुद्यते स्तब्धं दण्डमुष्टिहतं यथा। सरुक्स्तिमितमत्यर्थं वाते मांससमाश्रिते॥ २३०॥**

***दण्डमुष्टिताडितमिव तुद्यते। स्तिमितं = निश्चलमित्यर्थः। मांसमेदसोर्गतवातयोरेकलिङ्गत्वम्, अदूरान्तरेण प्रत्यासत्तेराश्रयप्रभावात्॥ २३०॥**

मांसगत वात में अङ्गों की गुरुता, डंडे या मूका से मारने के समान पीड़ा तथा स्तब्धता होती है। रोगी व्यथायुक्त और अत्यन्त निश्चल हो जाता है। मांस तथा मेद के परस्पर अत्यन्त सन्निकटस्थ होने के कारण आश्रय के प्रभाव से मांस तथा मेदोगत वात के एक ही चिह्न होते हैं॥ २३०॥

**तथा मेदःश्रितः कुर्याद् ग्रन्थीन्मन्दरुजो व्रणान्॥ २३१॥**

***तथा मेदःश्रितो मांसगवत्। दूरेण प्रत्यासत्तेरस्थिरूपाया भेदाच्च कुर्याद्, ग्रन्थीनित्यादिर्विशेषः॥ २३१॥**

मेदोगत वात के मांसगत वात के समान लक्षण होते हैं। तथा मन्द वेदना वाली ग्रन्थियों और व्रणों को उत्पन्न कर देता है। यही मेदोगवायु में मांसगतवायु से विशेषता है॥ २३१॥

**भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः। अस्वप्नः सतता रुक् च वाते दुष्टेऽस्थिसंस्थिते।**
**वाते मज्जगते पीडा न कदा चित्प्रशाम्यति॥ २३२॥**

***मज्जगतेऽस्थिगतवद्। यथा मेदोगतो मांसगतवत्स्यात्। पीडाऽत्र कदा चिन्न शाम्यत्ययं विशेषः॥ २३२॥**

दुष्ट वायु के अस्थियों में चले जाने पर अस्थियों की सन्धियों में भेदन के समान पीड़ा, सन्धिशूल, मांस तथा बल का क्षय, निद्रानाश तथा निरन्तर पीड़ा होती है। मज्जागत वात में अस्थिगत वात के समान लक्षण होते हैं। किन्तु यह विशेषता है कि मज्जागत वायु से जो पीडा उत्पन्न होती है वह कभी भी शान्त नहीं होती॥ २३२॥

**क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा। विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः॥**

***शुक्रं बध्नाति = स्खलयत्येव न। गर्भं क्षिप्रं मुञ्चति = आममेव पातयति। बध्नाति = मूढं करोति, वातदुष्टशुक्रारब्धत्वात्। विकृतिं=शुक्रस्य वर्णान्तरत्वादिरूपां, गर्भस्य विकृताङ्गत्वादिरूपां जनयति॥ २३३॥**

शुक्रस्थ प्रकुपित वात शुक्रक्षरण नहीं होने देता, शीघ्र ही आमगर्भ को गिरा देता है अथवा मूढ़ कर देता है, वीर्य को विकृत कर देता है अथवा वीर्य के वर्ण को बदल देता है, गर्भ के अङ्ग को विकृत कर देता है॥ २३३॥

रसादिधातुगतवायुचिकित्सामाह—

**त्वायौ त्वगाश्रिते स्नेहाभ्यङ्गं स्वेदञ्च कारयेत्। रक्तस्थे शीतलांल्लेपान्विरेकं रक्तमोक्षणम्॥**

रसगत वात में स्नेह का अभ्यङ्ग तथा स्वेदन कराना चाहिये। रक्तगत वात में शीतल लेप करना, विरेचन कराना तथा रक्तमोक्षण हितकर है॥ २३४॥

**मांसमेदोगते वाते सविरेकं निरूहणम् । अस्थिमज्जगते स्नेहं बहिरन्तश्च योजयेत् ॥२३५॥**

मांस तथा मेदोगत वात में विरेचन तथा निरूहवस्ति देनी चाहिये । अस्थि, तथा मज्जगत वात में बाहर तथा भीतर स्नेह की योजना करनी उचित है ॥ २३५ ॥

केतकादितैलमाह—

**केतकनागबलाऽतिबलानां यद्बहुलेन रसेन विपक्वम् ।**
**तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥ २३६ ॥**
**हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥ २३७ ॥**

केवड़ा, नागबला ( गंगेरन ) तथा कङ्घी के प्रचुर रस तथा अधिक तुषोदक से पकाये हुये तैल के उपयोग से अस्थिगत वात नष्ट हो जाता है । शुक्रस्थ वात में स्त्री द्वारा हर्ष उत्पन्न करावे तथा बल और वीर्य को बढ़ाने वाले अन्नपान का सेवन हितकर है ॥ २३६–२३७ ॥

## अथ स्थानविशेषेण वातव्याधिविशेषाः ।

तत कोष्ठगतवायुलक्षणमाह—

**वाते कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः । ब्रध्नहृद्रोगगुल्मार्शःपार्श्वशूलञ्च जायते ॥२३८॥**

कोष्ठाश्रित वात के दुष्ट होने पर मूत्र तथा मल का अवरोध होता है तथा ब्रध्न, हृद्रोग, गुल्म, अर्श और पार्श्वशूल ये सब उत्पन्न हो जाते हैं ॥ २३८ ॥

*अथ कोष्ठलक्षणमाह—

**स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुफ्फुसश्च कोष्ठ इत्यभिधीयते ॥**

**उण्डुकः 'पोठ' इति लोके । एतेन कोष्ठशब्देन सर्व एवाशयाः कथ्यन्ते । तथाऽपि विशेषार्थमाशयादिगतवातलक्षणान्यपि पृथग्वक्ष्यन्ते ॥ २३८ ॥**

आमाशय, अग्न्याशय, पक्वाशय, मूत्राशय, रक्त का स्थान, हृदय, पोठ और फुफ्फुस इन सब स्थानों को कोष्ठ कहते हैं । यद्यपि कोष्ठ से सभी आशयों का ग्रहण हो जाता है तथापि विशेष ज्ञान के लिये आमाशयादिगत वात के लक्षणों को अलग २ ही कहेंगे ॥ २३८ ॥

कोष्ठगतवातचिकित्सामाह—

**पाचनीयै रसैर्युक्तैरन्यैर्वा पाचयेन्मलान् । विशेषतः पिबेत्क्षीरं नरः कोष्ठगतेऽनिले ॥२३९॥**

कोष्ठगत वातरोग में रोगी के मल का पाचक रसों अथवा अन्य उपायों से पाचन करे । इस रोग में विशेषतः दुग्धपान करना हितकर है ॥ २३९ ॥

आमाशयगतवायुलक्षणमाह—

**हृत्पार्श्वोदरनाभीरुक्तृष्णोद्गारविसूचिकाः । कासः कण्ठास्यशोषश्च श्वासश्चामाशयेऽनिले ॥**

आमाशयगत वात में हृदय, पसलियों, पेट तथा नाभि में पीड़ा होती है, प्यास लगती है, डकार आता है, विसूचिका, कास, कण्ठशोष तथा श्वास ये सब लक्षण होते हैं ॥ २४० ॥

*अथामाशयस्य लक्षणमाह चरकः—

**नाभिस्तनान्तरं जन्तोराहुरामाशयं बुधाः ॥ इति ॥ २४० ॥**

भगवान् चरक ने बतलाया है कि प्राणियों के नाभि तथा स्तन के बीच में आमाशय का स्थान है । ऐसा विद्वान् लोग कहते हैं ॥ इति ॥ २४० ॥

आमाशयगतवायुचिकित्सामाह—

**आमाशयस्थे त्वनिले प्रशस्तं प्राग् लङ्घनं दीपनपाचनञ्च ।**
**प्रच्छर्दनं तीक्ष्णविरेचनं वा मुद्गा यवाः शालियुताः पुराणाः ॥ २४१ ॥**

आमाशयस्थ वात में सर्वप्रथम लङ्घन कराना तथा दीपन और पाचन ओषधियों का उपयोग प्रशस्त है, अथवा वमन और तीक्ष्ण विरेचन कराना उत्तम है । इस रोग से पीड़ित मनुष्य को पुराना मूंग, जौ तथा शालि चावल हितकर है ॥ २४१ ॥

**भूतीकपथ्याशटिपुष्कराणि बिल्वामृतादारुकनागराणि ।**

उग्राविषामागधिकाविडानि क्वाथास्त्रयः सामसमीरणघ्नाः ॥ २४२ ॥

*भूतीकः=रोहिषः, सुगन्धतृणविशेषस्तदलाभे उशीरं ग्राह्यम् । पुष्करं=पुष्करमूलम् । दारुकं=देवदारु । उग्रा=वचा । विषा=अतिविषा ॥ २४२ ॥

१–रोहिष सुगन्धित तृणविशेष (इसके अभाव में 'खस' लेना चाहिये), हरड, कचूर तथा पोहकरमूल इन ओषधियों के क्वाथ २—अथवा बेलगिरी, गुडूची, देवदारु तथा सोंठ, इनके क्वाथ ३—अथवा वच, अतीस, पिप्पली तथा विडनमक इनके क्वाथ को पीने से आमाशयगत वात नष्ट हो जाता है ॥२४२॥

षड्धरणयोगमाह—

चित्रकेन्द्रयवौ पाठा कटुकातिविषाऽभया । आमाशयोत्थवातघ्नं चूर्णं पेयं सुखाम्बुना ॥
योगेऽस्मिन्भिषजा ग्राह्याः षण्णां षड्धरणाः पृथक् । दिनेषु षट्सु दातव्यास्तेन षड्धरणः स्मृतः

*अत्र षण्णां समुदितानां षड्धरणमितानां चूर्णीकृतानामेकस्मिन्नहन्येकटङ्को देयः ॥

चित्त, इन्द्रजौ, पाठा, कुटकी, अतीस तथा हरड इन प्रत्येक ओषधियों को १–१ धरण ( २४–२४ रत्ती ) लेकर सूक्ष्म चूर्ण करके प्रतिदिन छः दिन तक १–१ धरण की मात्रा में उष्ण जल के साथ सेवन करने से आमाशयगत वात नष्ट हो जाता है । प्रतिदिन १ धरण की मात्रा से ६ दिन तक इस चूर्ण का सेवन किया जाता है इसीलिये इसे षड्धरणयोग कहते हैं ॥ २४३–२४४ ॥

अन्यषड्धरणयोगमाह—

आमाशयगते वाते छर्दिताय यथाक्रमम् । देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥२४५॥

*अयमर्थः—प्रथमदिवसे वमनं कारयितव्यं, ततो द्वितीयं दिनमारभ्य षड्दिनपर्यन्तं-पाठक्रमेणैकैकस्य चूर्णं टङ्कमितं देयमित्यर्थः ॥ २४५ ॥

आमाशयगत वात में प्रथम दिन वमन कराकर दूसरे दिन चित्त के १ धरण चूर्ण (२४ रत्ती) को, तीसरे दिन इन्द्रजौ के १ धरण चूर्ण ( २४ रत्ती ) को, चौथे दिन पाठा के १ धरण (२४ रत्ती) चूर्ण को, पाँचवें दिन कुटकी के १ धरण (२४ रत्ती) चूर्ण को, छठे दिन अतीस के १ धरण (२४ रत्ती) चूर्ण को तथा सातवें दिन हरड के १ धरण ( २४ रत्ती ) चूर्ण को उष्ण जल के साथ सेवन करे । इस प्रकार सात दिन में आमाशयगत वात नष्ट हो जाता है ॥ २४५ ॥

पक्वाशयगतवायुलक्षणमाह—

पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च । कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥२४६॥

*आटोपो=वातस्य क्षुभितत्वं, न तु गुडगुडाशब्दस्तस्यान्त्रकूजनोक्तत्वात् ॥२४६॥

पक्वाशयस्थ वात में आन्त्रकूजन, शूल, आटोप ( वातसंक्षोभ ), मूत्रकृच्छ्र, मलकृच्छ्र, आनाह तथा त्रिकस्थान में वेदना होती है ॥ २४६ ॥

पक्वाशयगतवायुचिकित्सामाह—

वह्नेः सम्वर्द्धनं कार्यं व मोदावर्त्तकं तथा । देयः स्नेहविरेकश्च पक्वाशयगतेऽनिले ॥ २४७ ॥

पक्वाशयगत वात में जठराग्नि को प्रदीप्त करना चाहिये । तथा उदावर्त्त को नष्ट करने वाली चिकित्सा का उपयोग करना और स्नेहयुक्त विरेचन कराना उचित है ॥ २४७ ॥

उदरगतवायुचिकित्सामाह—

वाते जठरगे दद्यात्क्षारचूर्णादिदीपनम् ॥ २४८ ॥

उदरस्थित वात में क्षार तथा चूर्ण आदि दीपन ओषधियों का सेवन कराना चाहिये ॥ २४८ ॥

कुक्षिगतवायुचिकित्सामाह—

शुण्ठीकुटजबीजाग्निचूर्णं कोष्णाम्बु कुक्षिगे ॥ २४९ ॥

कुक्षिगत वात में सोंठ, इन्द्रजौ तथा चित्त के चूर्ण को किञ्चित् उष्ण जल के साथ सेवन कराना चाहिये ॥ २४९ ॥

गुदगतवायुलक्षणमाह—

ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः । जङ्घोरुत्रिकपार्श्वांसपृष्ठरोगी गुदेऽनिले ॥२५०॥

*रोगोऽत्र रुजा, पीडेति यावत् ॥ २५० ॥

गुदगत वात में मल, मूत्र तथा अपान वायु का अवरोध, शूल, आध्मान, अश्मरी, शर्करा और जङ्घा, ऊरु, त्रिक, पसलियों, कन्धे तथा पीठ में पीडा होती है ॥ २५० ॥

गुदगतवायुचिकित्सामाह—

**वाते गुदगते दुष्टे कर्मोदावर्त्तकं हितम् ॥ २५१ ॥**

गुदगत वात के दुष्ट होने पर उदावर्त्त की चिकित्सा हितकर है ॥ २५१ ॥

हृदयगतवायुचिकित्सामाह—

**हृदयानिलनाशाय गुडूचीं मरिचान्विताम् । पिबेत्प्रातः प्रयत्नेन सुखं तप्ताम्भसा सह ॥**
**पिबेदुष्णाम्भसा पिष्टमाश्वगन्धं विभीतकम् । गुडयुक्तं प्रयत्नेन हृदयानिलनाशनम् ॥**
**देवदारुसमायुक्तं नागरं परिपेषितम् । हृद्वातवेदनायुक्तः पीत्वा सुखमवाप्नुयात् ॥२५२॥**

हृदयगत वात को नष्ट करने के लिये प्रातःकाल मिर्चयुक्त गुडूची को उष्ण जल के साथ पीना चाहिये। अथवा असगन्ध तथा बहेड़े को पीस कर गुड मिला कर प्रयत्नपूर्वक उष्ण जल के साथ पीने से हृदयगत वात नष्ट हो जाता है। अथवा देवदारु तथा सोंठ को पीस कर उष्ण जल के साथ पीने से हृदयगत वात से पीडित मनुष्य को सुख प्राप्त होता है ॥ २५२ ॥

कर्णेन्द्रियादिगतवायुलक्षणमाह—

**श्रोत्रादिष्विन्द्रियवधं कुर्यात्क्रुद्धः समीरणः ॥ २५३ ॥**

प्रकुपित वायु जब कर्ण इत्यादि इन्द्रियों में चली जाती है तो उन २ इन्द्रियों की शक्ति का नाश कर डालती है ॥ २५३ ॥

कर्णेन्द्रियादिगतवायुचिकित्सामाह—

**श्रोत्रादिष्वनिले दुष्टे कार्यो वातहरः क्रमः । स्नेहाभ्यङ्गावगाहाश्च मर्दनालेपनानि च॥२५४॥**

श्रोत्रादिगत दुष्टवात में वातनाशक चिकित्सा करनी चाहिये तथा स्नेहाभ्यङ्ग, स्नेहावगाहन, स्नेह-मर्दन तथा स्नेहप्रलेप करना हितकर है ॥ २५४ ॥

शिरागतवायुलक्षणमाह—

**कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम् । स बाह्याभ्यन्तरायामं खल्लीं कुब्जत्वमेव च ॥२५५॥**

*शूलं शिरायामेव । पूरणं=स्थूलत्वम् । कुञ्चनं=सङ्कोचः । बाह्यायामं=पृष्ठेन नतम् । अभ्यन्तरायामं=क्रोडेन नतम् ॥ ५५५ ॥

शिरागत वायु शिराओं में शूल, शिराओं का सङ्कोच, शिराओं में स्थूलता, बाह्यायाम, खल्ली तथा कुब्जत्व को उत्पन्न कर देती है ॥ २५५ ॥

शिरागतवायुचिकित्सामाह—

**स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च । वाते शिरागते कुर्यात्तथा चासृग्विमोचणम् ॥२५६॥**

शिरागत वात में स्नेहाभ्यङ्ग, स्नेहोपनाह, स्नेहमर्दन, स्नेहप्रलेप तथा रक्त-मोक्षण कराना चाहिये ॥ २५६ ॥

स्नायुगतवायोर्लक्षणं चिकित्सां चाह—

**शूलमाक्षेपकः कम्पः स्तम्भः स्नाय्वनिलाद्भवेत् । स्वेदोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ।**
**क्रुद्धे स्नायुगते वाते कारयेत्कुशलो भिषक् ॥ २५७ ॥**

स्नायुगत वात से शूल, आक्षेपक, कम्प तथा स्तम्भ होता है। प्रकुपित वात जब स्नायु में चला जाता है तब स्वेदन, उपनाह, अग्निकर्म, बन्धन तथा स्नेहमर्दन इन सब उपचारों को बुद्धिमान् वैद्य करावे ॥ २५७ ॥

सन्धिगतवायुलक्षणमाह—

**हन्ति सन्धिगतः सन्धीञ्छूलशोथौ करोति च ॥ २५८ ॥**

*हन्ति=विश्लेषयति ॥ २५८ ॥

सन्धिगत वात सन्धियों का विश्लेषण कर देता है तथा शूल और शोथ उत्पन्न करता है ॥२५८॥

सन्धिगतवायुचिकित्सामाह—

कुर्यात्सन्धिगते वाते दाहस्नेहोपनाहनम् । इन्द्रवारुणिकामूलं मागधीगुडसंयुतम् ।
भक्षयेत्कर्षमात्रं तत्सन्धिवातं व्यपोहति ॥ २५९ ॥

सन्धिगत वात में दाहक्रिया, स्नेहन तथा उपनाहन करवाना चाहिये । इन्द्रायण की जड़ तथा पिप्पली को गुड़ मिला कर १ तोले की मात्रा में खाने से सन्धिगत वात नष्ट हो जाता है ॥२५९॥

उक्तरोगाणां कृच्छ्रसाध्यत्वमाह—

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः । कालेन महता यत्नात्सिध्यन्ति न च वा न वा ॥
नवान् बलवतां त्वेतान् साधयेन्निरुपद्रवान् ॥ २६१ ॥

॥ शतेष्वेकः कश्चिन्मुच्यत इत्यर्थः । परं कः सिध्यति ? यस्तरुणो भवति तथा बलवानुपद्रवरहितश्च ॥ २६०–२६१ ॥

हनुस्तम्भ, अर्दित, आक्षेपक, पक्षाघात तथा अपतानक ये रोग यत्न करने से बहुत दिनों में अच्छे होते हैं अथवा नहीं भी होते । उपर्युक्त रोगों से पीड़ित सैंकड़ों मनुष्यों में से कोई एक अच्छा होता है जो कि तरुण, बलवान तथा उपद्रवरहित होता है । अन्य रोगी इस रोग से मर ही जाते हैं ॥ २६०–२६१ ॥

तेषामेवोपद्रवानाह—

विसर्पदाहरुग्भङ्गमूर्च्छाऽरुच्यग्निमार्दवैः । क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ॥२६२॥

॥वाताः = वातविकाराः, कार्यकारणयोरभेदोपचारात् । 'वातादिति' पाठे वातात्पक्षवधादय इति योज्यम् ॥ २६२ ॥

विसर्प दाह, वेदना, भङ्ग, मूर्च्छा, अरुचि तथा मन्दाग्नि से जिनका मांस तथा बल क्षीण हो गया है, ऐसे रोगियों को पक्षाघात इत्यादि वातरोग मार डालते हैं ॥ २६२ ॥

वातस्य साध्यासाध्यलक्षणमाह—

शूनं सुप्तत्वचं म्लानं कम्पाध्माननिपीडितम् । रुजाऽऽर्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत्॥

शोथयुक्त, जिनकी त्वचा संज्ञाहीन हो गई है, ग्लानियुक्त, कम्प तथा आध्मान से पीड़ित और वेदना से व्याकुल मनुष्यों का वातव्याधि विनाश कर डालता है ॥ २६३ ॥

इदानीं पञ्चविधस्य वायोः कार्यं लिङ्गं चाह—

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः। वायुः स्यात्सोऽधिकंजीवेद्वीतरोगः समाः शतम्॥

जिस मनुष्य का वात अव्याहत गति हो, अपने ठीक स्थान पर स्थित हो तथा प्रकृतिस्थ हो ऐसा मनुष्य रोगरहित होकर १०० वर्ष से अधिक दिन तक जीता है ॥ २६४ ॥

## अथ वातव्याधीनां सामान्यानि भेषजानि ।

तत्र चक्रदत्तप्रोक्तमहामाषादितैलमाह—

माषस्यार्द्धाढकं देयं तुलार्द्धं दशमूलतः । पलानि च्छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥
चतुर्भागावशेषं तं कषायमवतारयेत् । प्रस्थञ्च तिलतैलस्य पयो दद्याच्चतुर्गुणम् ॥ २६६ ॥
जीवनीयानि मञ्जिष्ठा चव्यं चित्रककट्फलम् । सव्योषं पिप्पलीमूलं रास्नामलकगोक्षुरम् ॥
आत्मगुप्ता तथैरण्डः शताह्वा लवणत्रयम् । देवदार्वमृताकुष्ठमश्वगन्धा वचा शटी ॥ २६८ ॥
एतैरक्षमितैः कल्कैः पाचयेन्मृदुनाग्निना । पक्षाघातार्दिते पुंसि हनुस्तम्भार्दिते तथा ॥
कर्णशूले शिरःशूले तिमिरे च त्रिदोषजे । पाणिपादशिरोग्रीवाभ्रमणे मन्दचङ्क्रमे ॥ २७० ॥
कलायखञ्जे पङ्गौ च गृध्रस्यामपबाहुके । पाने बस्तौ तथाऽभ्यङ्गे नस्ये कर्णादिपूरणे ॥२७१॥
तैलमेतत्प्रशंसन्ति सर्ववातविकारनुत् । महामाषादिनामेदं भाषितं मुनिभिः पुरा ॥ २७२ ॥

उड़द आधा आढ़क ( १२८ तो० ), दशमूल ५० पल (२०० तो०) तथा बकरे का मांस ३० पल

( १२० तो० ) लेकर १ द्रोण ( १०२४ तो० ) जल में पकावे । जब पकने २ चतुर्थांश शेष रह जाय तो उतार कर छानले । फिर उसमें २ प्रस्थ (१२८ तो०) तिल का तैल और तेल से चौगुना (५१२ तो०) दूध डाल दे । तत्पश्चात् जीवनीयगण, मजीठ, चव्य, चित्त, कायफल, सोंठ, मिर्च, पीपल, पिपरामूल, रास्ना, आंवले, गोखरू, कौंच के बीज, एरण्डमूल, सोया, तीनों नमक, देवदारु, गुडूची, कूठ, असगन्ध, वच तथा कचूर इन सब ओषधियों को १-१ तो० लेकर कल्क बना कर डाल कर मन्द आंच से पकावे तो यह 'महामाषादितैल' सिद्ध हो जाता है । इस तैल से पक्षाघात, अर्दित, हनुस्तम्भ, कर्णशूल, शिरःशूल, त्रिदोषज तिमिर तथा हाथ-पांव-शिर-ग्रीवा और कानों की जडता, कलायखञ्ज, पङ्गुता, गृध्रसी और अपबाहुक रोग नष्ट हो जाते हैं । पान, वस्ति, अभ्यङ्ग, नस्य तथा कर्णपूरण इत्यादि में इसका प्रयोग हितकर है । इससे सम्पूर्ण वातविकार नष्ट हो जाते हैं । पूर्वकाल में मुनियों ने महामाषादि नामक इस तैल का वर्णन किया है ॥ २६५-२७२ ॥

द्वितीयमहामाषादितैलमाह—

माषा यवातसीक्षुद्रा मर्कटी च कुरण्टकः ॥ २७३ ॥
गोकण्टप्टुण्टुकश्चैषां प्रत्येकं पलसप्तकम् । चतुर्गुणाम्बुना पक्त्वा पादशेषं शृतं नयेत् ॥२७४॥
कार्पासकास्थि बदरं शणबीजं कुलत्थकम् । पृथक्चतुर्दशपलं चतुर्गुणजले पचेत् ॥ २७५ ॥
कषायं तत्र गृह्णीयाच्चतुर्थांशावशेषितम् । प्रस्थञ्च च्छागमांसस्य चतुःषष्टिपले जले ॥ २७६ ॥
प्रक्षिप्य पाचयेद्धीमान्पादशेषं रसं नयेत् । तैलप्रस्थे ततः क्वाथान्सर्वांस्तान्क्रमतः पचेत् ॥
कल्कद्रव्यैः पचेदेभिरमृताकुष्ठसैन्धवैः । रास्नापुनर्नवैरण्डैः पिप्पल्या शतपुष्पया ॥२७८॥
बलाप्रसारणीभ्याञ्च मांस्या कटुकया तथा । पृथक्कर्षमितैरेतैः साधयेन्मृदुनाग्निना ॥ २७९ ॥
हन्यात्तैलमिदं शीघ्रं वातव्याधीनशेषतः । आक्षेपकं पक्षघातमूरुस्तम्भापबाहुकौ ।
हस्तकम्पं शिरःकम्पं विश्वाचीमर्दितं तथा ॥ २८० ॥

इति माषादितैलं शार्ङ्गधरात् ॥ २७३-२८० ॥

उड़द, जौ, अलसी, कटेरी, कौंच के बीज, कटसरैया, गोखरू तथा टुण्टुक ( श्योनाक भेद ) इन प्रत्येक ओषधियों को ४८-४८ तोले लेकर चौगुने जल में पकावे। चतुर्थांशावशेष रहने पर उतार कर छान ले । कपास के बीज, बेर, सन के बीज तथा कुलथी इन प्रत्येक ओषधियों को १४-१४ पल लेकर चौगुने जल में पकावे, चौथाई भाग जल शेष रहने पर उतार-छान कर रख ले । फिर १ प्रस्थ ( ६४ तो० ) बकरे के मांस को लेकर ६४ पल जल में पकावे, चतुर्थांश जल शेष रहने पर इस जल को छान कर रख ले। क्रमशः इन क्वाथों में ६४ तोले तेल को पकावे । तत्पश्चात् गुडूची, कूठ, सेन्धानमक, रास्ना, पुनर्नवा, पिप्पली, सौंफ, खिरेटी, प्रसारिणी, जटामांसी तथा कुटकी इन प्रत्येक ओषधियों को १-१ तो० लेकर कल्क बनाकर तेल में डाल कर मन्द आंच से पकावे । तो यह 'माषादितैल' सिद्ध हो जाता है। इस तेल से आक्षेपक, पक्षाघात, ऊरुस्तम्भ, अपबाहुक, हस्तकम्प, शिरःकम्प, विश्वाची, अर्दित तथा सम्पूर्ण वातव्याधियां शीघ्र नष्ट हो जाती हैं ॥ २७३-२८० ॥

मध्यमनारायण तैलमाह—

अश्वगन्धाबलाबिल्वं पाटलाबृहतीद्वयम् । श्वदंष्ट्रातिबलानिम्बश्योनाकञ्च पुनर्नवाम् ॥२८१॥
प्रसारणीमग्निमन्थं कुर्याद्दशपलं पृथक् । चतुर्द्रोणे जले पक्त्वा पादशेषं शृतं नयेत् ॥२८२॥
तैलाढकेन संयोज्य शतावर्या रसाढकम् । प्रक्षिपेत्तत्र गोक्षीरं ततस्तैलाच्चतुर्गुणम् ॥२८३॥
पृथक्पलमितैः कल्कैर्द्रव्यैरेभिः पचेद्भिषक् । वचाचन्दनकुष्ठैलामांसीशैलेयसैन्धवैः ॥२८४॥
अश्वगन्धाबलारास्नाशतपुष्पेन्द्रदारुभिः । पर्णीचतुष्टयेनैव तगरेण प्रसाधयेत् ॥ २८५ ॥
तत्तैलं भोजनेऽभ्यङ्गे पाने वस्तौ च योजयेत् । पक्षाघातं हनुस्तम्भं मन्यास्तम्भं गलग्रहम् ॥
कुब्जत्वं बधिरत्वञ्च गतिभङ्गं कटीग्रहम् । गात्रशोषेन्द्रियध्वंसं शुक्रनाशं ज्वरक्षयान् ॥२८७॥
अन्त्रवृद्धिं कुरण्डञ्च दन्तरोगं शिरोग्रहम् । पार्श्वशूलञ्च पङ्गुत्वं बुद्धिनाशञ्च गृध्रसीम् ॥

अन्यांश्च विविधान्वातान्हरेत्सर्वाङ्गसंश्रयान्। अस्याः प्रभावाद्वन्ध्याऽपि नारी पुत्रं प्रसूयते॥
यथा नारायणो देवो दुष्टदैत्यविनाशनः। तथेदं वातरोगाणां नाशनं तैलमुत्तमम् ॥ २९० ॥

असगन्ध, खिरेटी, बेलगिरी, पाढ़ल, कटेरी, बड़ी कटेरी, गोखरू, कड्ढी, नीम की छाल, सोनापाठा, पुनर्नवा, प्रसारिणी तथा अरनी इन सब औषधियों को १०-१० पल लेकर ४ द्रोण जल ( १ मन ११ सेर ३ छटांक १ तो० ) में पकावें। जब पकते-पकते चतुर्थांश जल शेष रह जावे तो उतार कर छान लें। तत्पश्चात् इस क्वाथ में तैल १ आढ़क ( २५६ तो०), शतावरी स्वरस १ आढ़क ( २५६ तो० ), गोदुग्ध ४ आढ़क तथा वच, लालचन्दन, कूठ, छोटी इलायची, जटामांसी, छार छबीला, सेन्धानमक, असगन्ध, खिरैटी, रास्ना, सौंफ, देवदारु, शालपर्णी, पृश्निपर्णी, मुद्गपर्णी, माषपर्णी इन सब औषधियों को ४-४ तोले लेकर कल्क बना कर डालकर तैल को सिद्ध कर लें। इस प्रकार मध्यम नारायण तैल सिद्ध होता है। इस तैल का भोजन, अभ्यङ्ग, पान तथा वस्ति में प्रयोग करे। इससे पक्षाघात, हनुस्तम्भ, मन्यास्तम्भ, गलग्रह, कुब्जता, बधिरता, गतिभङ्ग, कटिग्रह, गात्रशोष, इन्द्रियध्वंस, वीर्यनाश, ज्वर, क्षय अन्त्रवृद्धि, कुरण्ड, दन्तरोग, शिरोग्रह, पार्श्वशूल, पङ्गुता, बुद्धिनाश, गृध्रसी तथा अन्य विविध प्रकार के सम्पूर्ण शरीर में होने वाले वातरोग नष्ट हो जाते है। तथा इसके प्रभाव से वन्ध्या स्त्री भी पुत्र उत्पन्न करती है। जिस प्रकार नारायण देव दुष्ट दैत्यों का विनाश करते हैं उसी प्रकार यह **मध्यम नारायण तैल** समस्त वातरोगों का नाश करता है॥ २८१—२९० ॥

महानारायणतैलमाह—

तिलतैलं समादाय चतुराढकसम्मितम्। पञ्चपल्लवकल्केन शोधयेद्दोषशान्तये ॥२९१॥
तत्राजं दुग्धमथ वा गव्यं तैलसमं पचेत्। शतावरीरसञ्चापि तैलतुल्यं पचेद्भिषक् ॥२९२॥
दशमूली बला रास्ना शिग्रूत्पलपुनर्नवाः। शेफालिका नागबला बला चैव प्रसारणी ॥२९३॥
अश्वगन्धा सहचरो दशमूलं करञ्जकः। खदिरं चन्दनं लोध्रं वचाऽसनपलाशकम् ॥२९४॥
बकुलैरण्डवरुणशाल्युग्मकटम्भराः। शिरीष शिखरी वासाहिंस्राजम्बूबिभीतकम् ॥२९५॥
काञ्चनारः कपित्थश्च पारिभद्रः प्रियालकम्। पाषाणभेदः शम्पाको दुग्धिका दाडिमीफलम्॥
उदुम्बरः सप्तला च कन्यका मालतीत्वचम्। मागधी नलमूलञ्च यवकोलकुलत्थकम् ॥
आत्मगुप्ताऽर्ककार्पासबीजं वत्सादनी स्नुही। केतकीमूलधत्तूरलाङ्गलीगर्दभाण्डकम् ॥२९८॥
चित्रकञ्च महानिम्बं पञ्चवल्कलमेव च। मुण्डी टङ्कारी मुशली हंसपादी विशल्यकम् ॥२९९॥
एषां दशपलान्भागान्वारिण्यष्टगुणे पचेत्। पादशेषं परिस्राव्य तत्र तैलं पुनः पचेत् ॥३००॥
छागो मेषश्च हरिण एणश्च बहुश्रृङ्गकः। शशः शल्यः शिवा गोधा सिंहो व्याघ्रश्च भल्लुकः॥
वन्यो वराहः खड्गी च महिषो घोटकस्तथा। कपिर्बभ्रुर्बिडालश्च मूषकश्चोरुदर्दुरः ॥३०२॥
वर्तिकस्तित्तिरिर्लावः खञ्जरीटश्चकोरकः। उलूको नीलकण्ठश्च वन्यकुक्कुट एव च ॥३०३॥
गृध्रश्च गरुडो हंसश्चक्रः कारण्डवोऽपि च। कपोतः सारसः क्रौञ्चो वन्यः पारावतस्तथा॥
रोहितो मद्गुरश्चापि शिलीन्ध्रः श्रृङ्गकस्तथा। इल्लिसो गर्गरो वर्मिरथ काकः पिकोऽपि च॥
महामत्स्यः कच्छपश्च शिशुमारश्च साङ्कुचिः। मकरो घण्टिकाऽऽकारस्तदलाभे तु गोधिका॥
यथालाभमसमीपाच्च क्वाथं तैलसमं पचेत्॥ ३०७॥
रास्नाऽश्वगन्धामिसिदारुकुष्ठपर्णीचतुष्कागुरुकेशराणि।
सिन्धूत्थमांसीरजनीद्वयञ्च शैलेयकं चन्दनपुष्करञ्च ॥ ३०८ ॥
एला सयष्टी तगराब्दपत्रं भृङ्गोऽष्टवर्गस्तु वचा पलाशी।
स्थौणेयवृश्चीरकचोरकाख्यं मूर्वात्वचं कट्फलपद्मकं च।
मृणालजातीफलकेतकाख्यं सनागपुष्पं सरलं मुरा च।
जीवन्तिकोशीरवरास्तथैव दुरालभा वानरिका नखश्च ॥ ३१० ॥

केवर्त्तमुस्तार्जुनतिक्तकञ्च वातामखर्जूरकतुम्बुराश्च ।
सधातकीग्रन्थिकपर्पटाश्च पटोलहेमाह्वजयन्तिकाश्च ॥ ३११ ॥
त्रायन्तिकाऽलम्बुषशक्रबीजं रसाञ्जनाभात्रिवृतारुणाश्च ।
द्राक्षाकणाद्रोणपुनर्नवाश्च कोन्ती क्रिमिघ्नो हयमारकश्च ॥ ३१२ ॥
नीलोत्पलं पद्मककारवीभ्यां रम्भाऽनलो गोक्षुरकः क्षुरश्च ।
कङ्कोलकालेयकुसुम्भपुष्पं तुरुष्ककाश्मीरकसिक्थकञ्च ।
लवङ्गकर्पूररसालकाण्डकस्तूरिकावालकमम्बरञ्च ॥ ३१३ ॥

दारु=देवदारु । पर्णीचतुष्कं=शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी चेति । केशरः= पुन्नागस्तस्य पुष्पं ग्राह्यम्, तदलाभे नागकेशरं ग्राह्यम् । शैलेयकम् = 'छरीला' इति लोके । चन्दनमत्र श्वेतम् । पुष्करं =पुष्करमूलम् ।

'तगरस्याप्यलाभे तु कुष्ठं दद्याद्भिषग्वरः' ॥ २ ॥

भृङ्गः =त्वक्, अष्टवर्गालाभे शतावरीविदार्यश्वगन्धावाराही द्विगुणा दद्यात् । वाराही = 'गेठि' इति लोके । पलाशी =कर्चूरभेदः, 'गन्धपलाशी'ति कश्मीरे प्रसिद्धा, तदलाभे कर्चूर एव देयः । स्थौणेयः =गठिवनभेद ईषत्सुगन्धि 'थुनेर' इति लोके । वृश्चिरः = श्वेतमूला पुनर्नवा । चोरकः =ग्रन्थिपर्णस्यैव भेदः 'भटिउर' इति नैपालदेशे प्रसिद्धः । केतकस्य मूलं पुष्पञ्च दद्यात् । कैवर्त्तमुस्ता='केवटीमोथा–गुडतजी' इति च लोके । तिक्तकः=किराततिक्तकः । वातामं='बादाम' इति लोके । हेमाह्वं=धत्तूरस्य फलं मूलं पत्रञ्च । जयन्तिका= जैन्तित्वक् । त्रायन्तिका=अत्र लभ्यत एव न, तदलाभे बला । अलम्बुषा=लज्जालुभेदः । आभा=बब्बूलस्तस्य त्वक् । अरुणा = मञ्जिष्ठा । द्रोणः = द्रोणपुष्पः, 'गूमा' पञ्चाङ्गः । पुनर्नवा = रक्तपुष्पा । हयमारकः = करवीरस्तस्य मूलम् । पद्मकं = नीलोत्पलादन्योत्पलम् । पद्मकाष्ठमुक्तमेव । कारवी = 'मगरैला' इति लोके । रम्भायाः कन्दम् । क्षुरस्य फलानि । रसालकाण्डम् = 'आण्डी' सुगन्धद्रव्यम् ॥ २९१–३१३ ॥

कल्कानमीषां विपचेत्सुवैद्यः पृथक् पृथक् कर्षयुगोन्मितानाम् ।
शुभे च नक्षत्रमुहूर्त्तलग्ने सन्तोष्य विप्रांश्च भिषग्वरांश्च ॥ ३१४ ॥
सम्पूज्य नारायणनामधेयं देवं त्रिनेत्रं जगतामधीशम् ।
पात्रे तु हेम्नः खलु राजते वा ताम्रेऽथ वा लोहमयेऽपि रचेत् ॥ ३१५ ॥

अभ्यञ्जनेऽञ्जने नस्ये निरूहे चावगाहने । पाने चैतद्यथाव्याधि प्रयुञ्जीत चिकित्सकः ॥३१६॥
बहुनाऽत्र किमुक्तेन तैलमेतत्प्रयोजितम् । अवश्यं वातजान्व्याधीनशीतिमपि नाशयेत् ॥
एतस्याभ्यासतो जन्तोर्जरा जातु न जायते । पतन्ति वलयो नाङ्गे पलितञ्च न जायते ॥
नेत्रे तेजस्वि नितरां गरुडस्येव जायते । नोच्चैःश्रुतिर्न बाधिर्यं कर्णनादो न जायते ॥३१९॥
पाणिकम्पः शिरःकम्पः प्रलापश्च न जायते । बुद्धिभ्रंशो न जायेत तस्मात्कर्मसु पाटवम् ॥
यथा जलेन सिक्तस्य शाखिनः पल्लवादयः । वर्द्धन्ते धातवस्तद्वद् देहिनोऽनेन नित्यशः ॥
आमं गर्भं त्यजेज्जातु सूतिका तयुता च या । या च दुष्प्रसवस्त्रीणास्ताभ्य एतद्धितं परम् ॥
वन्ध्या च लभते पुत्रं गर्भपातो न जायते । योनिरोगाः प्रणश्यन्ति प्रदरश्च प्रशाम्यति ॥
अस्मात्तैलवरादन्यत्कुत्रचिन्नास्ति भेषजम् । बल्यं वृष्यं बृंहणञ्च रसायनमिदं महत् ॥ ३२४ ॥

पुरा देवासुरे युद्धे दैत्यैरभिहतान्सुरान् ।
भिन्नान्भग्नास्थिकान्विद्धान्पिच्चितान्व्यथयाऽर्दितान् ॥ ३२५ ॥

दृष्ट्वा हिताय देवानां नराणां चाब्रवीदिदम् । तैलं नारायणो देवो महनारायणाभिधम् ॥

४आढक ( १०२४ तो० ) तिल का तेल लेकर दोष की शान्ति के लिये पञ्चपल्लव के कल्क से शुद्ध कर ले । तत्पश्चात् उस तैल में ४ आढक बकरी अथवा गाय का दूध और ४ आढक शतावरी-

स्वरस डालकर पकावे। फिर दशमूल, खिरैटी, रास्ना, सहिजन, नीलकमल, पुनर्नवा, निर्गुण्टी, कट्टी, गंगेरन, प्रसारणी, असगन्ध, कटसरैया, दशमूल, करञ्ज, खैर, लालचन्दन, लोध, वच, विजयसार, पलाश, मौलसिरी, एरण्डमूल, वरना, दोनों प्रकार के कटंभर (सोनापाठा तथा अपराजिता), सिरसा, अपामार्ग, अड्रूसा, बालछड़, जामुन की छाल, बहेड़ा, कचनार, कैंत, बकाइन, चिरौंजी, पाषाणभेद, अमलतास, दुद्धी, अनार के फल, गूलर, सातला, घृतकुमारी, मालती, तज, पिप्पली, नरसल की जड़, जौ, बेर, कुलथी, कांच के बीज, मदार की जड़, कपास के बीज, गुडूची, थूहर, केवड़े की जड़, धतूर, करियारी, गदहे का अण्टकोष, चित्त, बकाइन, पञ्चवल्कल, मुण्डी, टेकारी, मुसली, लाल लज्जालु तथा इन्द्रायण की जड़ इन प्रत्येक ओषधियों को १०-१० पल लेकर अठगुने जल में पकावे। जब पकते २ चतुर्थांशावशिष्ट रह जाय तो छान कर इस काथ में उपर्युक्त तैल को फिर पकावे। फिर बकरा, भेड़, हरिण, एण मृग, सावर, खरगोश, शल्य (मत्स्य भेद), छिपकली, गोह, सिंह, बाघ, रीछ, जंगली सूअर, गैंडा, भैंसा, घोड़ा, बन्दर, नकुल, बिलाव, चूहा, मेंढ़क, बतख, तीतर, लवा, खञ्जन, चकोर, उल्लू, नीलकण्ठ, वनमुर्गा, गिद्ध, गरुड़, हंस, चकवा, कारण्डव, कबूतर, सारस, क्रौंच, जङ्गली कबूतर, रोहू मछली, मद्गुर मछली, शिलीन्ध्र, शृङ्गक, इल्लीश, गर्गर मछली, वरमी मछली, कौआ, कोयल, महामत्स्य, कछुआ, शिशुमार, सङ्कुच, मगर, घड़ियाल (यदि घड़ियाल न मिल सके तो उसके स्थान में 'गोह' लेना चाहिये। इनमें जितने प्राणियों का मांस मिल सके उतना देना चाहिये। इनके चार आढक रस में तेल का पाक करे। फिर रास्ना, असगन्ध, सोया, देवदारु, कूठ, शालिपर्णी, पृश्निपर्णी, माषपर्णी, अगर, पुन्नाग, (यदि 'पुन्नाग' न मिल सके तो 'नागकेशर' लेना चाहिये) सैन्धानमक, जटामांसी, हल्दी, दारुहल्दी, छरीला, श्वेतचन्दन, पोहकरमूल, छोटी इलायची, मुलहठी, तगर (तगर के अभाव में कूठ लेना चाहिये), नागरमोथा, तेजपात, दालचीनी, अष्टवर्ग की ओषधियां (यदि अष्टवर्ग की ओषधियां न मिल सकें तो उनके अभाव में शतावरी, विदारीकन्द, असगन्ध तथा वाराहीकन्द को द्विगुण मात्रा में लेना चाहिये), वच, गन्धपलाशी (कश्मीर में प्रसिद्ध है। यदि गन्धपलाशी न मिले तो कचूर लेना चाहिये), थुनेर (गठिवन भेद), श्वेतजड़वाली पुनर्नवा, नैपालदेश मे प्रसिद्ध भटेउर, मूर्वा, दालचीनी, कायफर, पद्मकाष्ठ, कमल की नाल, जायफल, केवड़े की जड़ तथा फूल. नागकेशर, धूप, मुरा, (गुजरात देश में प्रसिद्ध सुगन्धद्रव्यविशेष), गुडूची, सुगन्धवाला, हरड़, बहेड़ा, आंवला, जवासा, कौंच के बीज, नख, केवटीमोथा, अर्जुन, चिरायता, बादाम, छोहारे, नेपाली धनियां, धाय के फूल, पिपरामूल, पित्तपापड़े, परवल, धतूर के फल-मूल-पत्र, जैन्ती की छाल, त्रायमाण, अलम्बुषा (लज्जालु भेद), इन्द्रजौ, रसौत, बबूल की छाल, निशोथ, मजीठ, मुनक्का, पिप्पली, गूमा, लालमूल का पुनर्नवा, निर्गुण्डी के बीज, वायविडङ्ग, कनेर की जड़, नीलाकमल, कमल, मंगरेला, केले का कन्द, चित्त, गोखरू, तालमखाना, कङ्कोल, पीतचन्दन, कुसुम के फूल, शिलारस, केशर, मोम, लौंग, कपूर, ताड़ की जटा, कस्तूरी, सुगन्धवाला तथा अम्बर इन प्रत्येक ओषधियों को २-२ तोले लेकर कल्क बनाकर इस कल्क से तैल को पकावे तो 'महानारायण तैल' सिद्ध हो जाता है। शुभनक्षत्र, मुहूर्त तथा लग्न में वैद्य ब्राह्मणों तथा उत्तम वैद्यों की पूजा करके संसार के स्वामी नारायणदेव तथा त्रिनेत्र भगवान् शङ्कर की पूजा करके सोने, चांदी, ताम्बे अथवा लोहे के वर्त्तन में इस तैल को भर कर रख दे। फिर वैद्य रोग के अनुसार अभ्यङ्ग, अञ्जन, नस्य, निरूहवस्ति, अवगाहन तथा पान में इसका प्रयोग करे। अधिक कहने से क्या होता है लेकिन इतना तो अवश्य कहते हैं कि इस तैलका सविधि प्रयोग करने से ८० प्रकार के वात रोग अवश्य नष्ट हो जाते हैं। इस तैल के अभ्यास से बुढ़ापा कभी नहीं आता। शरीर में झुर्रियां नहीं पड़तीं। असमय में बाल नहीं पकते। नेत्र निरन्तर गरुड़ के समान तेजस्वी रहते हैं। ऊंचे सुनना, बाधिर्य तथा कर्णनाद कभी नहीं होता। हाथों का कांपना, शिरःकम्प तथा प्रलाप नहीं हो सकता। बुद्धि भ्रष्ट नहीं होती। कार्य करने

में समर्थता उत्पन्न होती हैं। जिस प्रकार जल से सींचने से पेड़ों के पल्लव आदि बढ़ते हैं उसी प्रकार इस तैल से नित्य शरीर को सींचने से मनुष्यों की धातुवृद्धि होती है। जिस स्त्री के आम गर्भ का पात हो जाता हो, सूतिका रोग युक्त तथा जो स्त्री दुष्ट प्रसव से क्षीण हो गई हो उनके लिये यह तैल परम हितकर है। इस तैल के प्रयोग से वन्ध्या स्त्री पुत्र प्राप्त करती हैं। गर्भपात नहीं होता। योनिरोग नष्ट होते हैं तथा प्रदर शान्त हो जाता है। इस परमोत्तम तैल से दूसरा और कहीं कोई भी ओषधि बढ़कर बलवर्द्धक, मैथुन-शक्ति बढ़ानेवाली तथा बृंहण नहीं है। यह तैल महारसायन है। प्राचीन काल में देवता तथा दैत्यों के युद्ध में दैत्यों के प्रहार से देवताओं के शरीर में चोट लगी थी, हड्डियां टूट गई थीं, शरीर विद्ध हो गया था, अस्थि-समूह पिस गये थे तथा पीड़ा से व्याकुल हो गये थे। यह देख कर नारायणदेव ने देवताओं तथा मनुष्यों के हित के लिये महानारायण नामक इस तैल का उपदेश दिया था॥ २९१–३२६॥

महायोगराजगुग्गुलुमाह—

**नागरं पिप्पलीमूलं चव्यमूषणचित्रकम्। भृष्टं हिङ्ग्वजमोदा च सर्षपो जीरकद्वयम्॥**
**रेणुकेन्द्रयवौ पाठा विडङ्गं गजपिप्पली। कटुकाऽतिविषा भार्गी वचा मूर्वा च पत्रकम्॥**
**देवदारु कणा कुष्ठं रास्ना मुस्ता च सैन्धवम्। एला त्रिकण्टकं पथ्या धान्यकञ्च विभीतकम्॥**
**धात्री च त्वगुशीरञ्च यवक्षारोऽखिलान्यपि। एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥**
**यावन्त्येतानि चूर्णानि तावानेवात्र गुग्गुलुः। संमर्द्य सर्पिषा पश्चात्सर्वं संमिश्रयेच्च तत्॥**
**एवं पिण्डञ्च तत्कृत्वा धारयेद् घृतभाजने। गुटिकाष्टङ्कमात्रास्तु खादेत्तास्तु यथोचिताः॥**
***यथोचिताः = दोषकालाद्यपेक्षया॥ ३३२॥**

सोंठ, पिपरामूल, चव्य, कालीमिर्च, चित्त, भुनीहींग, अजमोदा, सरसों, स्याहजीरा, रेणुका, इन्द्रजौ, पाठा, वायविडङ्ग, गजपिप्पली, कुटकी, अतीस, भारङ्गी, वच, मूर्वा, तेजपात, देवदारु, पीपल, कूठ, रास्ना, नागरमोथा, सेन्धानमक, छोटी इलायची, गोखरू, हरड़, धनियां, बहेड़ा, आंवला, दालचीनी, खस तथा जवाखार, इस सब ओषधियों को समान भाग में लेकर सूक्ष्म चूर्ण करे। फिर इस चूर्ण के बराबर गुग्गुल लेकर घी के साथ अच्छी तरह मिलाकर मर्दन करके एक पिण्ड बना ले। और उस पिण्ड को घी के बरतन में रख दे। पुनः उसमें से एक २ टङ्क (२४–२४ रत्ती) की गोलियां बनाकर दोष तथा काल के अनुसार इन गोलियों को खावे॥ ३२७–३३२॥

**आदौ शाणोन्मितं खादेत्सार्द्धशाणं ततः परम्। तदग्रे कर्षमर्द्धन्तु पूर्णं कर्षं ततः परम्॥**
**गुग्गुलुर्योगराजोऽयं महामुख्यो रसायनः। मैथुनाहारपानानां नियमो नात्र विद्यते॥३३४॥**
**अर्शांसि ग्रहणीरोगं प्लीहगुल्मोदरानपि। आनाहं मन्दमग्निञ्च श्वासं कासमरोचकम्॥**
**प्रमेहं नाभिशूलञ्च क्रिमिक्षयमुरोग्रहम्। सर्वान्वातामयान्हन्यादामवातमपस्मृतिम्॥३३६॥**
**वातरक्तं तथा कुष्ठं तथा दुष्टव्रणानपि। शुक्रदोषं रजोदोषमुदावर्त्तं भगन्दरम्॥३३७॥**

सेवन विधि—पहले कुछ समय तक १–१ गोली खावे फिर डेढ़-डेढ़ गोली, फिर आधा तोला इसके बाद एक तोले की मात्रा में सेवन करे। यह योगराजगुग्गुलु महामुख्य रसायन है। इसके सेवन काल में मैथुन तथा अन्नपान का कोई नियम नहीं। इसके सेवन से अर्श, ग्रहणीरोग, प्लीहा, गुल्म, उदररोग, आनाह, अग्निमान्द्य, श्वास, कास, अरुचि, प्रमेह, नाभिशूल, कृमिरोग, क्षय, ऊरुग्रह, समस्त वातरोग, आमवात, अपस्मार, वातरक्त, कुष्ठ, दुष्टव्रण, वीर्यदोष, रजोदोष, उदावर्त्त तथा भगन्दर रोग नष्ट हो जाते हैं॥ ३३३–३३७॥

**रास्नाऽऽदिक्काथसंयुक्तः सर्वान्वातामयान्हरेत्। काकोल्यादिश्रृतात्पित्तं कफमारग्वधादिना॥**
**दार्व्याश्रृतेन मेहांश्च गोमूत्रेण च पाण्डुताम्। मधुना मेदसो वृद्धिं कुष्ठं निम्बश्रृतेन च॥**
**छिन्नाक्काथेन वातास्रं शोथं मूलकजाच्छृतात्। पाटलाक्काथसहितो विषं मूषकसम्भवम्॥**
**त्रिफलाक्काथसंयुक्तो दारुणां नेत्रवेदनाम्। पुनर्नवाऽऽदिक्काथेन हन्ति सर्वोदराण्यपि॥३४१॥**

इस गुग्गुलु को रास्नादि क्वाथ के साथ सेवन करने से सम्पूर्ण वातव्याधियां नष्ट हो जाती हैं। काकोल्यादि क्वाथ के साथ सेवन करने से पित्त की शान्ति होती है। आरग्वधादि क्वाथ के साथ सेवन करने से कफ नष्ट होता है। दारुहल्दी के क्वाथ के साथ सेवन करने से प्रमेह, गोमूत्र के साथ सेवन करने से पाण्डुरोग, मधु के साथ सेवन करने से मेदोवृद्धि, नीम के क्वाथ के साथ सेवन करने से कुष्ठरोग, गुडूची के क्वाथ के साथ सेवन करने से वातरक्त, मूली के क्वाथ के साथ सेवन करने से शोथ, पाढ़ल के क्वाथ के साथ सेवन करने से चूहे का विष, त्रिफला के क्वाथ के साथ सेवन करने से नेत्र की दारुण वेदना तथा पुनर्नवादि क्वाथ के साथ सेवन करने से सम्पूर्ण उदर विकार नष्ट हो जाते हैं॥ ३३८-३४१॥

रास्नादिक्वाथमाह—

**रास्ना पुनर्नवा शुण्ठी गुडूच्येरण्डजं शृतम्। सप्तधातुगते वाते सामे सर्वाङ्गगेऽपि चेत्॥**

रास्ना, पुनर्नवा, सोंठ, गुडूची तथा एरण्डमूल इन सब ओषधियों का क्वाथ सप्तधातुगत वात, आमयुक्त वात तथा सर्वाङ्गगत वात में उपयोगी होता है। इसे रास्नादि क्वाथ कहते हैं॥ ३४२॥

रसोनकल्कमाह—

**युक्तः कल्को रसोनस्य तिलतैलेन सिन्धुना। वातरोगान्हरेत्सर्वाञ्ज्वरांश्च विषमानपि॥**

लहसुन का कल्क बनाकर तिल के तेल के तथा सेन्धानमक के साथ खाने से सम्पूर्ण वातरोग, तथा समस्त विषमज्वर नष्ट हो ज ते हैं॥ ३४३॥

**क्षीरेण तैलेन घृतेन वाऽपि मांसेन सार्द्धं लशुनानि खादेत्।**
**शाल्योदनेनापि च षष्टिकेन पलार्द्धवृद्धया दिवसानि सप्त॥ ३४४॥**
**वातोत्थरोगान्विषमज्वरांश्च शूलान्सगुल्मान्दहनस्य मान्द्यम्।**
**प्लीहानमुग्रं भुजपार्श्वशूलं शिरोव्यथां कृन्तति शुक्रदोषान्॥ ३४५॥**

दूध, तेल, घी, मांस, शालि चावल का भात अथवा साठी चावल के भात के साथ सात दिन तक क्रमतः प्रत्येक दिन २-२ तोले बढ़ा कर लहसुन का कल्क खाय तो वातजन्य रोग, विषमज्वर, शूल, गुल्म, अग्निमान्द्य, उग्र प्लीहा, हाथ तथा पसलियों की पीड़ा, शिरःशूल तथा शुक्रदोष नष्ट हो जाते हैं॥ ३४४-३४५॥

**अन्नप्रकारैः पललप्रकारैर्गोधूमकैर्वा यवशक्तुभिर्वा।**
**दुग्धेन तैलेन घृतेन वाऽपि युक्तानि शीते लशुनानि खादेत्॥ ३४६॥**
**संवर्त्तकैर्लावकपिञ्जलैर्वा मृग्याः पलैर्वाऽप्यथ कौक्कुटैर्वा।**
**वाराहवर्त्तीरकहारिणैर्वा सुसंस्कृतैरग्निबलं समीक्ष्य॥ ३४७॥**

अन्न के बने पदार्थों, मांसनिर्मित पदार्थों, गेहूं के बने हुये पदार्थों अथवा जौ के सत्तू के साथ दूध, तेल, घी, संवर्तक के मांस, लवा के मांस, तीतर के मांस, हिरण के मांस, अथवा मुर्गे के मांस, सुअर के मांस, वटेर के मांस अथवा सुसंस्कृत हिरण के मांस के साथ अग्नि तथा बल के अनुसार शीतकाल में लहसुन का सेवन करना चाहिये॥ ३४६-३४७॥

रसोनाष्टकमाह -

**रसोनपक्वकन्दस्य गुलिका निस्तुषीकृताः। पाटयित्वा च मध्यस्थं दूरीकुर्यात्तदङ्कुरम्॥३४८॥**
**निश्युग्रगन्धनाशाय दध्ना सञ्जीय रक्षयेत्। ततःप्रक्षाल्य संशोष्य शिलायां परिपेषयेत्॥**
**कल्कस्य पञ्चमं भागं चूर्णमेषां विनिक्षिपेत्। सौवर्चलं यवानीञ्च भर्जितं हिङ्गु सैन्धवम्॥**
**कटुत्रिकं जीरकञ्च समभागानि चूर्णयेत्। तिलतैलञ्च कल्कस्य तुर्यांशं तत्र मिश्रयेत्॥३५१॥**
**खादेत्कर्षमितं प्रातः किं वा दोषाद्यपेक्षया। अनुपानं प्रकुर्वीत वातारिशृतमन्वहम्॥३५२॥**
**सर्वाङ्गैकाङ्गजं वातमर्दितञ्चापतन्त्रकम्। अपस्मारं तथोन्मादमूरुस्तम्भञ्च गृध्रसीम्॥३५३॥**
**उरःपृष्ठकटीपार्श्वकुक्षिपीडां कृमीन्हरेत्। मद्यं मांसं तथाऽम्लञ्च रसं सेवेत नित्यशः॥३५४॥**

**आयासमातपं रोपमतिनीरं गुडं स्त्रियम् । रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरम् ॥ ३५५ ॥
वर्जयेत्तदतीसारी प्रमेही पाण्डुरोगवान् । अरोचकी गर्भिणी च मूर्च्छाऽर्शोरोगसंयुतः ॥३५६॥
रक्तपित्ती च शोषी च यक्ष्मी छर्द्यर्दितो नरः । पित्ते तु पथ्यभुक्कुर्यात्प्रयोगान्ते विरेचनम् ॥
अन्यथा तस्य जायन्ते कुष्ठपाण्ड्वामयादयः । स्त्रीस्तन्यं त्वरितं दद्याद्बालानामप्यनिच्छताम् ॥
तथा च लभते सिद्धिं महावीर्याद्रसोनतः ॥ ३५९ ॥**

लहसुन के पके हुये कन्द को छील कर साफ करके उसको चीरकर उसके बीच के अङ्कुर को निकाल दे। तत्पश्चात् लहसुन के उग्र गन्धको दूर करने के लिये उस लहसुन को रात में दही में रख दे। पुनः प्रातःकाल धोकर सुखाकर सिल पर पीस कर कल्क बना ले। पुनः उसमें काला नमक, अजवाइन, भुनी हींग, सेन्धानमक, सोंठ, मिर्च, पीपल तथा सफेद जीरा इन सब के चूर्ण को कल्क में कल्क का पञ्चमांश मिलादे और कल्क का चतुर्थांश प्रमाण में तिल का तेल मिलादे। फिर प्रातःकाल इसमें से १ तो० कल्क का सेवन करे। अथवा दोष तथा अग्नि-बलानुसार सेवन करे। अनुपान के लिये प्रतिदिन एरण्डक्वाथ का सेवन करे। यह रसोनाष्टक सर्वाङ्गवात, एकाङ्गवात, अर्दित, अपतन्त्रक, अपस्मार, उन्माद, ऊरुस्तम्भ, गृध्रसी तथा छाती-पीठ-कटि-पार्श्व और कुक्षि की पीड़ा एवं कृमियों को नष्ट कर डालता है। इसका सेवन करने वाला मनुष्य प्रतिदिन मद्य, मांस तथा खट्टे रस का सेवन करता रहे। परिश्रम, धूप, क्रोध, अत्यन्त जल का सेवन, गुड़ तथा स्त्रीप्रसङ्ग का निरन्तर त्याग कर दे। अतीसार, प्रमेह, पाण्डुरोग तथा अरुचि का रोगी, गर्भिणी, मूर्च्छा व अर्शरोग पीड़ित मनुष्य, रक्तपित्ती, शोषरोगी, यक्ष्मी तथा वमन से पीड़ित मनुष्य इस रसोनाष्टक का सेवन करना छोड़ दे। पित्तजन्य व्यथा हो तो पथ्य भोजन का सेवन करे। इस रसोनाष्टक के प्रयोग के पश्चात् विरेचन देना चाहिये। अन्यथा कुष्ठ तथा पाण्डुरोग इत्यादि व्याधियां उत्पन्न हो जाती हैं। स्त्री के दूध में मिला कर रसोनाष्टक के सेवन करने की इच्छा न करने वाले बालकों को पिलाने से लहसुन के वीर्य की महोत्कर्षता से बच्चों के समस्त वात विकार शीघ्र नष्ट होते हैं ॥ ३४८-३५९ ॥

वातारिरसमाह—

**रसो गन्धो वरा वह्निर्गुग्गुलुः क्रमवर्द्धितः । तत्रैकभागः सूतः स्याद्गन्धको द्विगुणः स्मृतः ॥
त्रिभागा त्रिफला योज्या चतुर्भागस्तु चित्रकः । गुग्गुलुः पञ्चभागः स्याद्रुबुतैलेन मर्दयेत् ॥
क्षिप्त्वा तत्रोदितं चूर्णं तेन तैलेन मर्दयेत् । गुटिकां कर्षमात्रान्तु भक्षयेत्प्रातरेव हि ॥३६२॥
नागरैरण्डमूलानां कषायं प्रपिबेदनु । अभ्यज्यैरण्डतैलेन स्वेदयेत्पृष्ठदेशकम् ॥ ३६३॥
विरेकपरिणामे तु स्निग्धमुष्णञ्च भोजयेत् ।
वातारिसंज्ञको ह्येष रसो नियतसेवितः । मासेन मरुतो रोगान्हरेत्सुरतवर्जिनः ॥ ३६४ ॥
इति चतुर्विंशो वातव्याध्यधिकारः समाप्तः ॥ २४ ॥**

पारद १ भाग, गन्धक २ भाग, त्रिफला ३ भाग, चित्त ४ भाग तथा गुग्गुलु ५ भाग लेकर इन सब को एरण्ड तैल से मर्दन करे। इसमें से प्रतिदिन १ तोले की गोली को प्रातःकाल खावे और इस गोली को खाने के पश्चात् सोंठ तथा एरण्डमूल के क्वाथ का अनुपान करे। तत्पश्चात् एरण्ड तैल को पीठ पर मल कर सेंक दे। यदि विरेचन होने लगे तो स्निग्ध तथा उष्ण अन्न का भोजन करे। इस वातारिसंज्ञक रस का प्रतिदिन सेवन करने से तथा मैथुन का परित्याग कर देने से एक महीने में सम्पूर्ण वातरोग नष्ट हो जाते हैं ॥ ३६०-३६४ ॥

इति 'भावप्रकाश' भावप्रकाशकारिकायां 'विद्योतिनी' नामिकायां भाषाटीकायां मध्यखण्डे चिकित्साप्रकरणे चतुर्विंशो वातव्याध्यधिकारः समाप्तः ॥ २४ ॥

# अथ पञ्चविंश ऊरुस्तम्भाधिकारः ॥ २५ ॥

तत्रोरुस्तम्भस्य विप्रकृष्टसन्निकृष्टनिदानसम्प्राप्तिपूर्वकं लक्षणमाह—

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः। जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः ॥ १ ॥
सश्लेष्ममेदःपवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ २ ॥
सक्थ्यस्थिनी प्रपूर्यान्तःश्लेष्मणा स्तिमितेन सः।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ। ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ४ ॥
संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥

ॐजीर्णाजीर्णे = किञ्चिज् जीर्णे किञ्चिदजीर्णे। शीतादिभिर्निषेवितैर्भुक्तैः। सङ्क्षोभेण = सञ्चलनेन। दिवा स्वप्नेन, रात्रौ जागरणेन। अभिभूय = दूषयित्वा। इतरं दोषं = पित्तम्। स्तिमितेन = आर्द्रेणावृतेनेति यावन्न तु घनेन। सः = पवनस्तदा ऊरू स्तभ्नाति। तेन = स्तम्भेन। अचेतनौ = शून्यौ। परकीयाविव = अक्रियावित्यर्थः। ध्यानम् = मूढता। पादसम्बन्धिनीभिः सदनकृच्छ्रोद्धरणसुप्तिभिश्च संयुक्तौ। अयं सुश्रुतेन महावातव्याधिषु पठितः॥

अन्न के कुछ जीर्ण तथा कुछ अजीर्णावस्था में शीतल, उष्ण, द्रव, शुष्क, गुरु तथा स्निग्ध भोजन करने से, परिश्रम से, शरीर के सञ्चलन से, दिवास्वप्न तथा रात्रिजागरण से कफ तथा मेदयुक्त वायु, आमयुक्त तथा सञ्चित हुये कफ और पित्त को दूषित करके जब ऊरुमें चली जाती है और ऊरु में जाकर लिपटे हुये आर्द्र कफ से ऊरु की हड्डियों में मिलकर स्तम्भ कर देती है। जिससे दोनों ऊरु स्तब्ध, शीतल तथा शून्य हो जाते हैं। और ऐसा प्रतीत होता है कि एक दूसरे मनुष्य की जाँघें हैं। अर्थात् निष्क्रिय हो जाती हैं। जाँघें भारी हो जाती हैं तथा अत्यन्त उग्र वेदना से युक्त होती हैं और रोगी मूढता, अङ्गमर्द, स्तैमित्य, तन्द्रा, वमन, अरुचि, ज्वर, पाँव की ग्लानि, पैरों का कठिनाई से उठना तथा पैरों की जड़ता इन लक्षणों से युक्त हो जाता है। इस रोग को ([1]'ऊरुस्तम्भ') कहते हैं और कुछ वैद्य इसे 'आढ्यवात' कहते हैं। सुश्रुत ने तो इसे महावातव्याधियों में पढ़ा है ॥ १–५ ॥

ऊरुस्तम्भपूर्वरूपमाह—

प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥६॥

निद्रा, अत्यन्त ध्यान, क्रियाराहित्य, ज्वर, रोमहर्ष, अरुचि, वमन और जङ्घा तथा ऊरुओं में पीडा ये ऊरुस्तम्भ के पूर्वरूप हैं ॥ ६ ॥

---

१. पाश्चात्य वैद्यक में ऊरुस्तम्भ को पाराप्लीजिया ( Paraplegia ) कहते हैं। इसके भी वे ही कारण हैं जिनका कि पक्षाघात के स्तम्भ में पृष्ठ २५७ में वर्णन किया गया है। यथा:—फिरङ्ग, हृद्रोग, वृक्करोग, वातरक्त, सीसविष, धमनीदार्ढ्य, अथेरोमा ( Atheroma ) मस्तिष्क के अर्बुद, सिर पर आघात, मद्य, आहार तथा व्यायाम का अतिसेवन इत्यादि ये सब उपर्युक्त फिरङ्गादि के कारण शरीर की धमनियों को भङ्गुर तथा विकृत कर देते हैं। जिससे वे जल्दी फट सकती हैं या उनमें रक्त जल्दी जम सकता है। जब मस्तिष्क के उस विभाग की जिसका कि सम्बन्ध पैरों से है रक्तवाहिनी फट जाती है जिससे कि रक्तस्राव ( Haemorrhage ) होता है या रक्तवाहिनी में रक्त जम जाता ( Thrombosis ) है या अन्तःशल्य ( Imbolis ) के कारण रक्त का बहाव बन्द हो जाता है तब मस्तिष्क का वह भाग अपना कार्य नहीं कर सकता। इसका परिणाम यह होता है कि दोनों पैरों का मस्तिष्क से सम्बन्ध टूट जाने के कारण उनका घात ( Paralysis ) हो जाता है। अतः अब पैरों में इच्छानुसार गति नहीं होती तथा पैरों की शीतोष्ण इत्यादि सम्बन्धिनी संवेदनायें मस्तिष्क तक नहीं पहुंचतीं जैसा कि अपने यहाँ भी वर्णन है कि:—

'तदा स्तम्भनाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्यातामित्यादि'।

तब इस अवस्था को ऊरुस्तम्भ ( Paraplegia ) कहते हैं।

ऊरुस्तम्भरूपमाह—

वातशङ्किभिरज्ञानात्तत्र स्यात्स्नेहनात्पुनः। पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जङ्घोरुग्लानिरत्यर्थं शश्वद्दाहवेदना। पादश्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः। अन्यनेयौ हि सम्भग्नावूरुपादौ च मन्यते ॥

*अज्ञानात्=अनिश्चयात्। स्तम्भसुप्तिकर्मरहितपाददर्शनेन, वातशङ्किभिः=वातव्याधिशङ्किभिः तत्र=ऊरुस्तम्भे। स्नेहात्=स्नेहदानात्। स्नेहादिना स्नेहन्या चिकित्सया पादसदनादय ऊरुभग्नोपमत्वात् ते विकाराः स्युः। जङ्घोर्वोर्गमनादावशक्तिः। अदाहवेदना=ईषद्दाहेन सह वेदना। अन्यनेयौ=अन्यचाल्यौ भवतः ॥ ७-९ ॥

पाँव का स्तम्भ, पाँव की जड़ता तथा क्रियाहीनता इत्यादि लक्षणों को देखकर वातव्याधि से आशङ्कित होकर मनुष्य अज्ञान से वातव्याधियों के समान तैल इत्यादि स्नेहन चिकित्साओं के करने से पैरों में पीडा, जडता, पैरों को उठाते समय अत्यन्त वेदना, जङ्घा तथा ऊरु में अत्यन्त ग्लानि, निरन्तर कुछ दाहयुक्त वेदना होती है। पैरों को उठा कर रखते समय विशेष पीडा होती है तथा शीतल पदार्थों का स्पर्शज्ञान नहीं होता। बैठने, दबाने, चलने तथा मिलाने में असमर्थ होता है। रोगी ऐसा समझता है कि उसके ऊरु तथा पैर टूट से गये हैं, उसके पैर दूसरों के चलाने से चलते हैं ॥ ७-९ ॥

ऊरुस्तम्भारिष्टमाह—

यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥

*अन्यथा=दाहाद्युपद्रवरहितं तमपि, नवम्=उत्पन्नमात्रं, साधयेत् ॥ १० ॥

यदि ऊरुस्तम्भ का रोगी दाह, व्यथा, सुई चुभाने के समान पीडा तथा कम्प से युक्त हो तो उसे ऊरुस्तम्भ मार डालता है। यदि दाह इत्यादिक उपद्रवों से रहित हो तथा तत्काल का उत्पन्न हुआ हो तो साध्य है ॥ १० ॥

ऊरुस्तम्भचिकित्सामाह—

स्नेहासृक्स्रावमनं वस्तिकर्म विरेचनम्। वर्जयेदाढ्यवाते तु यतस्तैस्तस्य कोपनम् ॥११॥
तस्मादत्र सदा कार्यं स्वेदलङ्घनरूक्षणम्। आममेदःकफाधिक्यान्मारुतं परिरक्षता ॥ १२ ॥
यद्यत्स्यात्कफप्रशमनं न तु मारुतकोपनम्। तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम् ॥ १३ ॥
सर्वो रूक्षः क्रमः कार्यस्तत्रादौ कफनाशनः। पश्चाद्वातविनाशाय विधातव्याखिला क्रिया॥
भोज्याः पुराणाः श्यामाककोद्रवोद्दालशालयः। जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥१५॥
शाकैरलवणैर्द्ध्याजलतैलाज्यसाधितैः। सुनिषण्णकनिम्बार्कवृन्ताकवधपल्लवैः ॥ १६ ॥
वायसीवास्तुकाद्यैश्च साधितैः शाकमूलकैः। शाकैरलवणैर्युक्तं जीर्णं शाल्योदनं भिषक् ॥१७॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशार्त्तिपूर्वकः। स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः ॥ १८ ॥
प्रतरयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम्। सरश्च विमलं शीतं स्थिरतोयं पुनःपुनः ॥१९॥
यथा विशुष्केस्य कफे शान्तिमूरुग्रहो व्रजेत्। शरीरबलमग्निश्च कार्यैषा रक्षता क्रिया ॥२०॥

स्नेहन, रक्तमोक्षण, वमन, वस्तिकर्म तथा विरेचन को आमवात रोग में नहीं कराना चाहिये। क्योंकि इन क्रियाओं से ऊरुस्तम्भ प्रकुपित होता है इसलिये इस रोग में सर्वदा स्वेदन, लङ्घन तथा रूक्षण क्रियाओं को करना चाहिये। इस रोग में वायु की रक्षा करते हुये आम, मेद तथा कफ की अधिकता से जो जो ओषधियाँ कफशामक हों और वायुप्रकोपक न हों उन २ सब ही ओषधियों का सर्वदा सेवन करना चाहिये। यही ऊरुस्तम्भ रोग की ओषधि है। इस रोग में सम्पूर्ण रूक्ष क्रिया करनी चाहिये। उसमें भी यह क्रम है कि आदि में कफनाशक चिकित्सा करनी चाहिये तत्पश्चात् वातनाशक सम्पूर्ण क्रियाओं का विधान करना चाहिये। घृतरहित जाङ्गल मांस के साथ अथवा लवण रहित शाक के साथ पुराने साँवा, कोदो, वनकोदो तथा पुराने चावलों को खाना चाहिये। शिरियारी,

नीम के पत्ते, मदार के पत्ते, अमलतास के पत्ते, मकोय, वथुवा तथा मूली आदि के जल, तेल अथवा घी से साधित नमक रहित शाक खाना चाहिये। भोजन के जीर्ण हो जाने पर वैद्य को चाहिये कि रोगी को लवणरहित शाकों के साथ शालि चावलों के भात को खिलावे। यदि रूक्षण क्रिया से निद्रा-नाश तथा वेदनापूर्वक वायु का प्रकोप हो गया हो तो वातनाशक स्नेहन तथा स्वेदन क्रिया को करना चाहिये। रोगी को शीतल जल वाली सुन्दर नदी में धार के साथ साथ तैरावे अथवा निर्मल शीतल और स्थिर जल वाले तालाव में बारम्बार तैरावे। तथा शरीर के वल की और अग्नि की रक्षा करते हुये जिस प्रकार कफ के सूखने पर उरुस्तम्भ शान्त हो ऐसी क्रिया करनी चाहिये ॥ ११-२० ॥

**सक्षारमूत्रस्वेदांश्च रूक्षाण्युत्सादनानि च। कुर्याद्दाहे च मूत्राद्यैः करञ्जफलसर्षपैः ॥ २१ ॥**
**मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक्। पिचुमर्दस्य वा मूलैरथ वा देवदारुणः ॥२२॥**
**क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक्। गाढमुत्सादनं कुर्यादूरुस्तम्भे सवेदने ॥ २३ ॥**

क्षार तथा मूत्रयुक्त पदार्थों से स्वेदन तथा रूक्ष पदार्थों से उत्सादन क्रिया करनी चाहिये। यदि दाह हो तो मूत्रादि से अथवा करञ्ज के फलों से युक्त सरसों से अथवा असगन्ध की जड़ के चूर्ण से अथवा मदार की जड़ के चूर्ण से अथवा नीम की जड़ के चूर्ण से या देवदारु के चूर्ण से ऊरु को उत्सादन करे।

वेदनायुक्त ऊरुस्तम्भ में शहद, सरसों तथा वल्मीक मृत्तिका के साथ उपर्युक्त पदार्थों को खूब जोर से मर्दन करे ॥ २१-२३ ॥

**दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान्। तर्कारीसुरसाशिग्रुवचावत्सकनिम्बकैः।**
**पत्रमूलफलैस्तोयं शृतमुष्णञ्च सेवनम् ॥ २४ ॥**

ऊरुस्तम्भजन्य पीडा मे बुद्धिमान वैद्य दन्ती, छोटी दन्ती, काली तुलसी तथा सरसों से खूब मर्दन करे। अरणी, काली तुलसी, सहिजन, वच, कुड़े तथा नीम के पत्तों, जड़ तथा फलों के उष्ण क्वाथ का सेवन करे ॥ २४ ॥

**भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः। पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः ॥ २५ ॥**

भिलावा, गुडूची, सोंठ, दारुहल्दी, हरड़, पुनर्नवा तथा दशमूल इनका सेवन करने से ऊरु-स्तम्भ नष्ट हो जाता है ॥ २५ ॥

**पिप्पली पिप्पलीमूलं भल्लातकफलानि च। कल्कं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते ॥**

पिप्पली, पिपरामूल तथा भिलावों का कल्क मधु मिला कर सेवन करने से ऊरुस्तम्भ रोग से छुटकारा मिल जाता है ॥ २६ ॥

रास्नादिक्वाथमाह—

**रास्नाश्यामाकपथ्यामरिचमिसिशिवावेल्लशट्यश्वगन्धा-**
**यासच्छिन्नाजमोदासुमुखमतिविषावृद्धदारौ बृहत्यौ।**
**शुण्ठी तिक्ता यवानि सहचरचविकैरण्डदार्व्यजकर्णा-**
**ऊरुस्तम्भामवातं कफपवनरुजं दण्डकांश्चाशु हन्यात् ॥ २७ ॥**

रास्ना, सावां, हरड़, काली मिर्च, सोया, हल्दी, वायविडङ्ग, कचूर, असगन्ध, जवासा, गुडूची, अजमोदा, वनतुलसी, अतीस, विधारा, छोटी कटेरी, बड़ी कटेरी, सोंठ, कुटकी, अजवाइन कटसरैया, चव्य, एरण्डमूल, दारुहल्दी तथा राल इन ओषधियों से सिद्ध रास्नादि क्वाथ का सेवन करने से ऊरु-स्तम्भ, आमवात, कफ तथा वातसम्बन्धी रोग और दण्डकाक्षेप तत्काल नष्ट होजाता है ॥ २७ ॥

**ग्रन्थिकारुष्करकृष्णानां क्वाथं क्षौद्रान्वितं पिबेत्। लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ॥**

पिपरामूल, भिलावा तथा पिप्पली के मधुयुक्त क्वाथ को पीने से अथवा त्रिफला तथा कुटकी के चूर्ण को मधु मिला कर चाटने से ऊरुस्तम्भ नष्ट हो जाता है ॥ २८ ॥

**सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः। पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ॥२९॥**

वातरोगाधिकार रोग में वर्णित षड्धरण चूर्ण को उष्ण जल के साथ पीने से अथवा मधु तथा

मूलं वैल्वं तथैरण्डं चित्रकं विश्वभेषजम्। हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम्॥ ५७॥

*वातरोगान्तर्गताध्मानचिकित्सायां लिखितो नाराचनामा रसोऽन्यच्च विरेचनं शूले हितम्॥ ५७॥

बेल की जड़, एरण्ड की जड़, चित्त, सोंठ, हींग तथा सेन्धानमक इनके चूर्ण को खानेसे तत्काल शूल नष्ट हो जाता है। वातरोगान्तर्गत आध्मानचिकित्सा में लिखा हुआ नाराच नामक रस तथा और भी दूसरे विरेचन शूल में हितकर हैं॥ ५७॥

कूष्माण्डक्षारमाह—

कूष्माण्डं तनु कृत्वा तु क्षिप्त्वा घर्मे विशोषयेत्।
स्थाल्यां निक्षिप्य तत्सर्वं पिधानेन पिधाय च॥ ५८॥

चुल्ल्यां निवेश्य वह्निञ्च ज्वालयेत्कुशलो जनः। यथा तन्न भवेद्भस्म किन्त्वङ्गारो दृढो भवेत्॥
तदा निर्वापयेच्छीतं सर्वथा चूर्णितन्तु तत्। माषद्वयमितं तावच्छुण्ठीचूर्णेन मिश्रितम्॥
जलेन भक्षयेन्नित्यं महाशूलाकुलो नरः। असाध्यमपि यच्छूलं तदप्येतेन शाम्यति॥६१॥

पेठे के बारीक टुकड़े करके धूप में डालकर सुखावें। तत्पश्चात् इन टुकड़ों को हंडिया में भरकर शराव से ढककर चूल्हे पर रख कर बुद्धिमान् मनुष्य अग्नि को जला दे। इसमें इतनी आंच देनी चाहिये कि ये टुकड़े जल कर भस्म न हो जांय किन्तु दृढ़ अङ्गारों के समान हो जांय, फिर इन्हें उतार ले और सर्वथा शीतल होजाने पर इनका चूर्ण करले फिर इस चूर्ण को २ माशे (१२ रत्ती) की मात्रामें लेकर और इसमें दो ही माशे सोंठ का चूर्ण मिलाकर पानी के साथ प्रतिदिन महा भयङ्कर शूल से व्याकुल मनुष्य खावे। असाध्य शूल भी इसके सेवन से शान्त होजाता है॥५८-६१॥

परिणामशूलचिकित्सामाह—

लङ्घनं प्रथमं कुर्याद्वमनं सविरेचनम्। पक्तिशूलोपशान्त्यर्थं तत्र वान्तेर्विधिर्यथा॥ ६२॥
पीत्वा तु क्षीरमाकण्ठं मदनक्वाथसंयुतम्। कान्तारकस्य पौण्ड्रस्य कोशकारस्य वा रसम्॥
कषायो वाऽथ निम्बस्य कटुतुम्बीरसोऽथ वा। यथाविधि वमेद्धीमान्पक्तिशूलार्दितो जनः॥

परिणामशूल की शान्ति के लिये सर्वप्रथम लङ्घन तत्पश्चात् वमन और विरेचन कराना चाहिये। वमन कराने की विधि इस प्रकार है:—परिणामशूल से पीडित मनुष्य मैनफल के क्वाथ के साथ दूध को अथवा कान्तार (कैतारा) नामक ईख के रस को अथवा पौण्ड्र ईख के रस को या कोशकार ईख के रस को अथवा नीम के क्वाथ को या कड़वी तुम्बी के रस को कण्ठपर्य्यन्त पीकर विधिपूर्वक वमन करे॥ ६२-६४॥

त्रिवृता च तथा दन्त्या तैलेनैरण्डजेन वा। दत्तं विरेचनं सद्यः पक्तिशूलनिवारणम्॥६५॥

निशोथ, दन्ती अथवा एरण्ड तैल का विरेचन देने से परिणामशूल शीघ्र नष्ट होजाता है॥

विडङ्गादिमोदकमाह—

विडङ्गतण्डुलव्योषत्रिवृद्दन्ती सचित्रका। सर्वाण्येतानि संहृत्य सूक्ष्मचूर्णानि कारयेत्॥६६॥
गुडेन मोदकान्कृत्वा खादेदुष्णेन वारिणा। जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम्॥६७॥

वायविडङ्ग के बीज, सोंठ, मिर्च, पिप्पली, निशोथ, दन्ती तथा इन सब को एकत्र करके सूक्ष्म चूर्ण कर डाले। फिर इस चूर्ण को गुड़ के साथ मोदक बनाकर उष्ण जल केसाथ खावे तो त्रिदोषजन्य परिणामशूल नष्ट होजाता है॥ ६६-६७॥

शुण्ठ्यादिकल्कमाह—

नागरतिलगुडकल्कं पयसा सम्पिष्य यः पुमांल्लिह्यात्। उग्रं परिणतिशूलं नश्येत्तस्य त्रिरात्रेण॥

जो मनुष्य सोंठ, तिल तथा गुड़ के कल्क को दूध के साथ पीसकर चाटता है उसका उग्र परिणामशूल तीन दिन में नष्ट होजाता है॥ ६८॥

पीतं शम्बूकजं भस्म जलेनोष्णेन तत्क्षणात्। पक्तिजं नाशयत्येव शूलं विष्णुरिवासुरान्॥

छोटे घोंघे की भस्म को उष्ण जल के साथ पीने से परिणामशूल इस प्रकार तत्काल नष्ट हो जाता है जैसे कि विष्णु भगवान् राक्षसों का नाश कर डालते हैं ॥ ६९ ॥

पथ्यादिलौहमाह—

लौहपथ्याकणाशुण्ठीचूर्णं समधुसर्पिषा । विलिहन्विनिहन्त्येव शूलं हि परिणामजम् ॥७०॥

लौहभस्म, हरड़, पिप्पली तथा सोंठ के चूर्ण को मधु तथा घी के साथ चाटते ही परिणामशूल नष्ट हो जाता है ॥ ७० ॥

नारिकेलक्षारमाह—

नारिकेलं सतोयं च लवणेन सुपूरितम् । मृदाऽऽववेष्टितं शुष्कं पक्वं गोमयवह्निना ॥ ७१ ॥
पिप्पल्या भक्षितं हन्ति शूलं हि परिणामजम् । वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम्

पानी भरे हुये नारियल में नमक भर कर मिट्टी से आवेष्टित कर सुखाकर कण्डे की आंच से पका कर भस्म करले। इस भस्म को पिप्पली के चूर्ण के साथ खाने से वातिक, पैत्तिक, श्लैष्मिक तथा सान्निपातिक परिणामशूल नष्ट हो जाता है ॥ ७१-७२ ॥

अन्नद्रवशूलचिकित्सामाह—

अन्नद्रवाख्ये शूले तु न तावत्स्वास्थ्यमश्नुते । यावत्कटुकपित्ताम्लमन्नं न च्छर्दयेद् द्रवम् ॥

जब तक कड़वे तथा पित्तयुक्त अम्ल अन्न को रोगी वमन नहीं करेगा तब तक अन्नद्रव नामक शूल में स्वास्थ्य नहीं प्राप्त कर सकता है ॥७३॥

जातमात्रे जरत्पित्ते शूलमाशु विनाशयेत् । पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम् ॥

पित्तजन्य परिणामशूल के उत्पन्न होते ही वमन करके नष्ट कर दे तथा कफ से उत्पन्न हुये परिणामशूल को विरेचन द्वारा नष्ट कर दे ॥ ७४ ॥

अन्नद्रवे च तत्कार्यं जरत्पित्ते यदीरितम् । जरत्पित्तेऽपि तत्पथ्यं प्रोक्तमन्नद्रवे तु यत् ॥७५॥

परिणामशूल में जिन चिकित्साओं का वर्णन किया गया है अन्नद्रवशूल में उन्हीं का उपयोग करना चाहिये तथा जो जो पदार्थ परिणामशूल में पथ्य कहे गये हैं वे ही अन्नद्रवशूल में भी समझने चाहिये ॥ ७५ ॥

आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ॥ ७६ ॥

आमाशय तथा पक्वाशय के शुद्ध हो जानेपर अन्नद्रवशूल शान्त हो जाता है ॥ ७६ ॥

माषेण्डरीं सलवणां सुस्विन्नां तैलपाचिताम् । तादृशीं सर्पिषा खादेदन्नद्रवनिपीडितः॥७७॥

अन्नद्रव से पीड़ित मनुष्य सेन्धानमक मिलाकर उड़द की पीठी की छोटी २ बड़ियों को वाष्पस्वेदित कर तेल में पकाकर घी के साथ खावे ॥ ७७ ॥

धात्रीफलभवं चूर्णमयश्चूर्णसमन्वितम् । यष्टीचूर्णेन वा युक्तं लिह्यात्क्षौद्रेण तद्द्रवे ॥ ७८ ॥

आंवलों के चूर्ण में लौहभस्म अथवा मुलहठी का चूर्ण मिलाकर मधु के साथ चाटने से अन्नद्रवशूल शान्त होता है ॥ ७८ ॥

श्यामाकतण्डुलैः सिद्धं सिद्धं कोद्रवतण्डुलैः । प्रियङ्गुतण्डुलैः सिद्धं पायसं सहितं हितम् ॥
*अत्र प्रियङ्गुः = विशेषः ॥ ७८ ॥

सांवा, कोदो तथा कांगुनी के चावलों से पायस बनाकर उसमें हितकर द्रव्यों को डालकर खाना अन्नद्रवशूल से पीड़ित मनुष्य के लिये हितकर हैं ॥ ७८ ॥

गौडिकं शौरणं कन्दं कूष्माण्डमपि भक्षयेत् । कलाययवशक्तून्वा शक्तून्वा लाजसम्भवान् ॥
*गौडिकं=गुडेन संस्कृतं पक्वान्नम् ॥ ७९ ॥

कुलत्थशक्तूनथ वा दध्नाऽद्याद् दाधिकं तथा । चणकानामथो शक्तून्कोद्रवस्यौदनं तथा ॥
*दाधिकं=दध्ना संस्कृतं भक्तं 'महेरि' इति लोके ॥ ८० ॥

गुड़ द्वारा निर्मित अन्न, सूरनकन्द, पेठा, मटर, जौ के सत्तू, खीलों के सत्तू अथवा कुलथी के सत्तू को दही के साथ खाय या दहीनिर्मित पदार्थों ( मट्ठर ) को खाय अथवा चने के सत्तू या कोदो के भात को खाय ॥ ७९-८० ॥

**गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम् । ससितं शीतदुग्धेन मृदितं कथितं हितम् ॥ ८१ ॥**

गेहूं के मण्डक अर्थात् खीर को घी, गुड़ तथा मिश्री मिलाकर ठण्डे दूध में मलकर खाना अन्न-द्रवशूल में हितकर है ॥ ८१ ॥

**अन्नद्रवो दुश्चिकित्स्यो दुर्विज्ञेयो महागदः । तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ॥८२॥**

अन्नद्रव शूल दुश्चिकित्स्य, बड़ी कठिनाई से समझ में आनेवाला तथा महारोग है। अतएव वैद्य को उचित है कि उसकी शान्ति के लिए भली भांति उपाय करे ॥ ८२ ॥

**अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः । तस्मादत्रान्नपानानि मात्राहीनानि कारयेत् ॥८३॥**

अन्नद्रवशूल तथा परिणामशूल में अग्नि मन्द हो जाती है। अतः इन रोगों में अन्न तथा जल की मात्रा अल्प कर देनी चाहिये ॥ ८३ ॥

**कलाययवगोधूमाः श्यामाकाः कोरदूषकाः । राजमाषाश्च माषाश्च कुलत्थाः कङ्गुशालयः ॥**
**दधिलुप्तरसं क्षीरं सर्पिर्गव्यं समाहितम् । वास्तूकं कारवेल्ली च कर्कोटकफलानि च ॥८५॥**
**बर्हिणो हरिणा मत्स्या रोहिताद्याः कपिञ्जलाः । एतस्मिन्नामये शस्ता मता मुनिचिकित्सकैः**

*दधिलुप्तरसं=दध्ना लुप्तो रसः=प्रकृतरसो यस्य तत्क्षीरं, दधियुक्तं क्षीरमित्यर्थः ॥

मटर, जौ, गेहूं, सांवां, कोदो, राजमाष, उड़द, कुलथी, काकुन, शालिचावल, दधिमिश्रित दुग्ध, गाय तथा भैंस का घी, बथुआ, करैले, ककोड़े, मोर तथा हिरन का मांस, रोहू इत्यादि मछलियां तथा तीतर का मांस, ये सब अन्नद्रव शूल में हितकर हैं, ऐसा चिकित्सक ऋषियों का मत है ॥ ८४-८६ ॥

गुडमण्डूरमाह—

**गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम् । त्रिपलं लोहकिट्टस्य तत्सर्वं मधुसर्पिषा ॥ ८७ ॥**
**समालोड्य समश्नीयादक्षमात्रप्रमाणतः । आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥८८॥**
**अन्नद्रवं जरत्पित्तमम्लपित्तं सुदारुणम् । परिणामसमुत्थञ्च शूलं संवत्सरोत्थितम् ॥ ८९ ॥**

गुड़, आवले का चूर्ण तथा हरड़ों का चूर्ण प्रत्येक ४ तोले तथा मण्डूर भस्म १२ तोले इनको मधु तथा घी में मिलाकर १ तोले की मात्रा में भोजन के आदि, मध्य तथा अन्त में खाने से सुदारुण अन्नद्रव शूल, जरत्पित्त, अम्लपित्त तथा एक वर्ष का पुराना परिणाम शूल नष्ट हो जाता है ॥

शूलरोगे पथ्यान्याह—

**व्यायामं मैथुनं मद्यं लवणं कटुकं रसम् । वेगरोधं शुचं क्रोधं विदलं शूलवांस्त्यजेत् ॥ ९० ॥**

**इति त्रिंशः शूलाधिकारोऽथवा शूलपरिणामशूलान्नद्रवजरत्पित्ताधिकारः समाप्तः ॥ ३० ॥**



व्यायाम, मैथुन, मद्य, लवण, कटुरस, मलमूत्र के वेगों को रोकना, शोक, क्रोध तथा द्विदल धान्य जैसे-चना, अरहर और मटर इत्यादि को शूलरोगी त्याग दे ॥ ९० ॥

इति श्री 'भावप्रकाश' भावप्रकाशकारिकायां 'विद्योतिनी' नामिकायां भाषाटीकायां मध्यखण्डे चिकित्साप्रकरणे त्रिंशः शूलाधिकारः समाप्तः ॥ ३० ॥



# अथैकत्रिंश उदावर्त्तानाहाधिकारः ॥ ३१ ॥

तत्रोदावर्त्तस्य विप्रकृष्टनिदानमाह—

वातविण्मूत्रजृम्भाऽश्रुक्षवोद्गारवमीन्द्रियैः । क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः॥

*इन्द्रियमत्र शुक्रम् । अत्र तृतीया सहार्था । धृत्या = वेगविघातेन ॥ १ ॥

अपान वायु, मल, मूत्र, जृम्भा, आँसू , छींक, डकार, वमन, शुक्र, भूख, प्यास, श्वास तथा निद्रा इन तेरह वेगों को रोकने से उदावर्त्त उत्पन्न होता है ॥ १ ॥

उदावर्त्तस्य सामान्यलक्षणमाह—

यथोर्ध्वं जायते वायोरावर्त्तः स चिकित्सकैः। उदावर्त्त इति प्रोक्तो व्याधिस्तत्रानिलः प्रभुः॥

*आवर्त्तो = भ्रमः ॥ २ ॥

जिस रोग में वायु का आवर्त्त ( भ्रम, चक्कर ) ऊपर को जाता है उस रोग को वैद्यलोग उदावर्त्त कहते हैं । इस रोग में वायु की प्रधानता होती है ॥ २ ॥

अधोवातावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा । जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात्॥

*तत्तद्वेगाभिघातभिन्नानामुदावर्त्तानां क्रमेण विशिष्टानि लक्षणान्याह । तत्रापानवातनिरोधजस्योदावर्त्तस्य लक्षणमाह—वातेति । सङ्गः = अप्रवृत्तिः । ध्मानम् = आध्मानम् । क्लमः = अनायासश्रमः । रुजा जठरे । अन्ये = तोदशूलगुल्मादयः ॥ ३ ॥

अपान वायु को रोकने से वायु, मूत्र तथा मल का अवरोध, पेट का फूलना, विना परिश्रम के थकान प्रतीत होना, पेट में पीड़ा तथा अन्य वातजन्य तोद, शूल तथा गुल्म इत्यादि रोग उत्पन्न हो जाते हैं ॥ ३ ॥

पुरीषावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ४ ॥

*पुरीषवेगे धारिते सति, आटोपः=सरुग् गुडगुडशब्दः । शूलमिति पक्वाशये । परिकर्त्तिका=गुदे कर्त्तनवत्पीडा । ऊर्ध्ववातः = उद्गारः ॥ ४ ॥

मल के वेग को रोकने से पेट में आटोप अर्थात् अल्प पीडायुक्त गुड़गुड़ शब्द, पक्वाशय में शूल, गुदा में कतरने के समान वेदना, मलावरोध, डकारों का आना अथवा मुखमार्ग से मल का निकलना ये लक्षण होते हैं ॥ ४ ॥

मूत्रावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा । विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥

*विनामः = व्यथया वपुषो नमनम् । वङ्क्षणानाहः = वङ्क्षणयोराकर्षणवद्व्यथा ॥

मूत्र के वेग को रोकने से मूत्राशय तथा लिङ्ग में शूल, मूत्रकृच्छ्र, शिरःशूल, व्यथा के मारे शरीर का झुक जाना तथा वङ्क्षणानाह अर्थात् ऐसी व्यथा प्रतीत होना मानो कोई मनुष्य दोनों वङ्क्षणों को खींच रहा हो ॥ ५ ॥

जृम्भाऽवरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ।
तथाऽक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ ६ ॥

जृम्भा को रोकने से मन्या तथा गले का स्तम्भ, वातसम्बन्धी शिरःशूल, आंख, नासिका, मुख तथा कानों में भी वेदना होती है ॥ ६ ॥

नेत्रोदकावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**मन्यास्तम्भः शिरःशूलमर्दितार्द्धावभेदकौ। इन्द्रियाणाञ्च दौर्वल्यं क्षवथोः स्याद्विधारणात्**

छींक के वेग को रोकने से मन्यास्तम्भ, शिरःशूल, अर्दित, अर्द्धावभेदक तथा इन्द्रियों की दुर्वलता ये रोग उत्पन्न हो जाते हैं॥ ८ ॥

उद्गारावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वाऽप्रवृत्तिः।**
**उद्गारवेगेऽभिहते भवन्ति जन्तोर्विकाराः पवनप्रसूताः॥ ९॥**

**छकण्ठास्यपूर्णत्वं—कवलेनेव। तोदो—हृद्यामाशये च। कूजोऽव्यक्तशब्दः। उदरे वायोरप्रवृत्तिः, उच्छ्वासादिनिरोधात्। पवनप्रसूताः=पवनाज्जाताः, विकाराः=हिक्कादयः॥९॥**

डकार के वेग को रोकने से गला कवल ( ग्रास ) से रुंधा-सा प्रतीत होता है। आमाशय तथा हृदय में सुई चुभाने के समान पीड़ा होती है। पेट में वायु का कूजना, श्वास इत्यादि के निरोध से उदर में वायु की अप्रवृत्ति तथा अन्य हिक्का इत्यादि वातजन्य रोग उत्पन्न हो जाते हैं॥ ९॥

वमनावरोधोत्पन्नोदावर्तस्य लक्षणमाह—

**कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः। कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः॥ १०॥**

वमन को रोकने से कण्डू, चकत्ते, अरुचि, व्यङ्ग, शोथ, पाण्डुरोग, ज्वर, कुष्ठ, हृल्लास तथा विसर्प ये सब रोग उत्पन्न हो जाते हैं॥ १०॥

वीर्यावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च।**
**शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते तु शुक्रे॥ ११॥**

**छतत्स्रवणं=शुक्रस्रावः। ते ते विकाराः=वातकुण्डलिकाऽऽदयः॥ ११॥**

शुक्र के वेग को रोकने से मूत्राशय, गुदा तथा अण्डकोषों में पीडा, मूत्र का अवरोध, शुक्राश्मरी, वीर्यस्राव तथा अन्यान्य वातकुण्डलिका इत्यादि रोग उत्पन्न हो जाते हैं॥ ११॥

क्षुधावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**तन्द्राऽङ्गमर्दावरुचिः श्रमश्च क्षुधाविघातात्कृशता च दृष्टेः॥ १२॥**

भूख को रोकने से तन्द्रा, अङ्गमर्द, अरुचि, श्रम तथा दृष्टि की दुर्वलता ये रोग उत्पन्न होते हैं॥

तृषावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद्धृदये व्यथा च॥ १३॥**

पिपासा को रोकने से कण्ठ का शोष, कम सुनाई देना तथा हृदय में पीड़ा, ये सब लक्षण उत्पन्न हो जाते हैं॥ १३॥

श्वासावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवाऽपि गुल्मः॥ १४॥**

श्वास को रोकने से थके हुये मनुष्य के हृदय में पीडा, मोह तथा गुल्मरोग उत्पन्न हो जाता है॥

निद्रावरोधोत्पन्नोदावर्त्तस्य लक्षणमाह—

**जृम्भाऽङ्गमर्दाक्षिशिरोऽतिजाड्यं निद्राविघातादथ वाऽपि तन्द्रा॥ १५॥**

**छअतिजाड्यं=गौरवम्। 'शिरोगात्राक्षिगौरवमिति' तन्त्रान्तरे पाठात्॥ १५॥**

निद्रा को रोकने से जृम्भा, अङ्गों का टूटना, शिर में गुरुता तथा तन्द्रा ये लक्षण उत्पन्न हो जाते हैं। तन्त्रान्तर में ऐसा पाठ है कि शिर, गात्र तथा नेत्रों में गुरुता होती है॥ १५॥

रूक्षादिकुपितवातोत्पन्नोदावर्त्तस्य निदानसम्प्राप्तिपूर्वकं लक्षणमाह—

**वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः। भोजनैः कुपितः सद्य उदावर्त्तं करोति च।**

वातमूत्रपुरीषाश्रुकफमेदोवहानि वै। स्रोतांस्युदावर्त्तयति पुरीषं न प्रवर्त्तयेत्।
ततो हृद्वस्तिशूलार्त्तो हृल्लासारतिपीडितः। वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः॥ १६॥
श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान्। वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान्।
बहूनन्यांश्च लभते विकारान्वातकोपजान्॥ १७॥

*वेगावरोधजमुदावर्त्तमभिधाय रूक्षादिकुपितवातजमाह—वायुरिति। उदावर्त्तयति=वायुरूर्ध्वं भ्रमेणेव वातादिवहानि स्रोतांसि निरुणद्धि न तु विडादीनधो गमयति। मनोविभ्रमः=रज्जौ सर्पज्ञानम्। श्रवणविभ्रमः=अन्यथा श्रवणम्॥ १६–१७॥

कोष्ठ में रहने वाला वायु रूक्ष, कसैले, कटु तथा तिक्त पदार्थों के भोजन करने से तत्काल उदावर्त्त को उत्पन्न कर देता है। प्रकुपित वात अपानवायु, मूत्र, मल, आंसू, कफ तथा मेदोवह स्रोतसों को अवरुद्ध करके मल को नीचे नहीं जाने देता। उस समय हृदयशूल तथा वस्तिशूल से दुःखी, हृल्लास तथा अरति से पीड़ित मनुष्य बड़ी कठिनाई से वायु, मल तथा मूत्र को बाहर निकाल पाता है। तथा श्वास, खांसी, प्रतिश्याय, दाह, मोह, पिपासा, ज्वर, वमन, हिक्का, शिरःशूल, मनोविभ्रम ( रस्सी में सर्प का भान ), कुछ का कुछ सुनाई देना तथा और भी दूसरे प्रकुपित वातजन्य विकार हो जाते हैं॥ १६–१७॥

असाध्योदावर्त्तस्य लक्षणमाह—

तृष्णाच्छर्दिपरिक्लिष्टं क्षीणं शूलैरुपद्रुतम्। शकृद् वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत्॥१८॥

*परिक्लिष्टं=क्लेशसंयुक्तम्॥ १८॥

यदि उदावर्त्त का रोगी तृषा और वमन से पीडित हो, क्षीण हो गया हो, शूलयुक्त हो, मल का वमन करता हो तो बुद्धिमान् वैद्य को चाहिये कि उसकी चिकित्सा न करे॥ १८॥

आनाहस्य सामान्यलक्षणमाह—

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन।
प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति॥ १९॥

*आमम्=अपक्वमाहाररसम्। शकृत्=पुरीषं वा। क्रमेण निचितं=सञ्चितम्। भूयो विगुणानिलेन=दुष्टवायुना, विबद्धं=व्यायामशोषितं वा, यथास्वं=पूर्ववदप्रवर्त्तमानम्। एनं विकारमानाहमाहुः॥ १९॥

क्रमतः सञ्चित आम, आहार का न पका हुआ रस अथवा मल दुष्ट वायु द्वारा सूखकर अथवा बंधकर अपने मार्ग से नहीं निकलता इस विकार को वैद्यवृन्द आनाह कहते हैं॥ १९॥

आमजानाहस्य लक्षणमाह—

तस्मिन्भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः।
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनञ्च॥ २०॥

*विघातनम्–अप्रवृत्तिः॥ २०॥

आमरसजन्य आनाह में तृष्णा, प्रतिश्याय, शिर में दाह, आमाशय में शूल, शरीर में गुरुता, हृत्स्तम्भ तथा डकार का न आना ये लक्षण होते हैं॥ २०॥

मलसंचयेनोत्पन्नानाहस्य लक्षणमाह—

स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतो वमिश्च।
श्वासश्च पक्वाशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि॥ २१॥

*पक्वाशयजे=शकृत्सञ्चयजे, आनाहे। स्तम्भशब्दः=कटीपृष्ठयोः स्तब्धतावाची पुरीषमूत्रयोरप्रवृत्तिवाची च। अलसोक्तानि लक्षणानि=आध्मानवातविघातादीनि॥ २१॥

मलसञ्चयजन्य आनाह में कमर तथा पीठ की स्तब्धता, मल तथा मूत्र का अवरोध, शूल,

मूर्च्छा, मल का वमन तथा अलसोक्त लक्षण जैसे–आध्मान और वात का विघात इत्यादि लक्षण होते हैं ॥ २१ ॥

उदावर्त्तानां चिकित्सामाह—

**अधोवातनिरोधोत्थे उदावर्त्ते हितं मतम्। स्नेहपानं तथा स्वेदो वर्त्तिर्वस्तिर्हितो मतः ॥२२॥**

***वर्त्तिः = फलवर्त्तिः ॥ २२ ॥**

अपानवायु के निरोध से उत्पन्न होने वाले उदावर्त्त में स्नेहपान, स्वेद, फलवर्ति तथा वस्तिकर्म हितकर बतलाया गया है। २२ ॥

**विड्विघातसमुत्थे तु विड्भङ्गाऽन्नं तथौषधम्। वर्त्यभ्यङ्गावगाहाश्च स्वेदो वस्तिर्हितो मतः ॥**

मल के वेग को रोकने से उत्पन्न हुए उदावर्त रोग में विरेचक अन्न, विरेचक ओषधि, फलवर्त्ति, अभ्यङ्ग, अवगाहन, स्वेद तथा वस्तिकर्म हितकर बतलाया गया है ॥ २३ ॥

**मूत्रावरोधजनिते क्षीरवारिवचां पिबेत्। दुःस्पर्शास्वरसं वाऽपि कषायं ककुभस्य च ॥२४॥**

***दुःस्पर्शा=कण्टकारी दुरालभा च, तुल्यगुणत्वात् ॥ २४ ॥**

मूत्रावरोधजन्य उदावर्त्त में जलमिश्रित दुग्ध में वच का चूर्ण मिलाकर पीवे अथवा कण्टकारी का स्वरस या अर्जुन की छाल का स्वरस पीवे। यहां पर दुःस्पर्शा से कण्टकारी तथा यवासा दोनों का ग्रहण होता है क्योंकि ये दोनों ओषधियाँ गुण में समान हैं ॥ २४ ॥

**एर्वारुबीजं तोयेन पिबेद्वा लवणीकृतम्। सितामिक्षुरसं क्षीरं द्राक्षां यष्टीमथापि वा ॥**
**सर्वथैव प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ २५ ॥**

ककड़ी के बीजों को जल से पीसकर नमक मिलाकर पीवे अथवा मिश्री, ईख का रस, दूध, मुनक्का तथा मुलहठी का रस पान करे। इस उदावर्त में मूत्रकृच्छ्र तथा अश्मरी की चिकित्सा को सर्वथा प्रयुक्त करे ॥ २५ ॥

**जृम्भाऽभिघातजे स्नेहं स्वेदं वाऽपि प्रयोजयेत्। अन्यानपि प्रयुञ्जीत समीरणहरान्विधीन् ॥**

जृम्भानिरोधज उदावर्त्त में स्नेहन, स्वेदन तथा अन्य वातनाशक उपचारों को करे ॥२६॥

**नेत्रनीरावरोधोत्थे मुञ्चेद्वाऽपि दृशोर्जलम्। स्वप्यात्सुखञ्च तस्याग्रे कथयेच्च कथाः प्रियाः ॥**

अश्रुस्रावनिरोधज उदावर्त में आँखों में अश्रुधारा बहावे तत्पश्चात् सुखपूर्वक सोवे और रोगी के सामने प्रिय कथाओं को कहे ॥ २७ ॥

**क्षवथोर्घातजे तीक्ष्णघ्राणनस्यार्कदर्शनैः। प्रवर्त्तयेत्क्षुतं सक्तां स्नेहस्वेदौ च शीलयेत् ॥ २८ ॥**

***तीक्ष्णं=मरिचराजिकाऽऽदि ॥ २८ ॥**

छींक रोकने से उत्पन्न उदावर्त में कायफर के चूर्ण, मिर्च, राई इत्यादि तीक्ष्ण पदार्थों को सुंघाकर अथवा सूर्य को दिखाकर छिकावे, स्नेहन तथा स्वेद का भी प्रयोग करे ॥ २८ ॥

**उद्गारस्यावरोधे तु स्नैहिकं धूममाचरेत्। छर्दिनिग्रहसञ्जाते वमनं लङ्घनं हितम् ॥ २९ ॥**
**विरेचनं चात्र मतं तैलेनाभ्यञ्जनं तथा। वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ॥ ३० ॥**
**आ वारिनाशात् क्वथितं पीतवन्तं प्रकामतः। रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥**
**तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधः। शालिः पयो निरूहश्च हितं मैथुनमेव च ॥ ३२ ॥**

उद्गारनिरोधज उदावर्त्त में स्निग्ध पदार्थों का धूमपान करे। वमन को रोकने से उत्पन्न उदावर्त्त में वमन तथा लङ्घन कराना हितकर है। और विरेचन कराना तथा तैलाभ्यङ्ग कराना प्रशस्त माना गया है।

वीर्यविघातजन्य उदावर्त्त में दूध में चौगुना जल तथा वस्तिशोधक ओषधियों को डालकर पकाले। जब सब जल जल जाय तब उतार कर छान कर पिलावे। और प्रिया रमणियोंसे सम्भोग कर रखे तथा उसे अभ्यङ्ग, अवगाहन, मद्यपान, मुरगे का मांस, शालि चावल, दूध, निरूहवस्ति तथा मैथुन का सेवन ये सब हितकर हैं ॥ २९–३२ ॥

क्षुद्विघातसमुद्भूते स्निग्धमुष्णं तथा लघु । रुच्यमल्पं हितं भक्ष्यं पुष्पं सेव्यं सुगन्धि यत् ॥

भूख को रोकने से उत्पन्न उदावर्त्त में स्निग्ध, उष्ण, लघु, रुचिकर तथा हितकर अन्न अल्प मात्रा में भोजन कराना चाहिये । तथा इस उदावर्त्त का रोगी सुगन्धित पुष्पोंका भी सेवन करे ॥

तृषाविघातसम्भूते शीतः सर्वो विधिर्हितः । कर्पूरशिशिरं स्वल्पं पिबेत्तोयं शनैः शनैः ॥३४॥

तृड्विघातज उदावर्त में समस्त शीतल उपचार हितकर है । कर्पूर से शीतल तथा सुगन्धित किये हुये जल का बारम्बार थोड़ी-थोड़ी मात्रा में सेवन करे ॥ ३४ ॥

श्रमश्वासधृतौ शस्तो विश्रामः सरसौदनः ॥ ३५ ॥

श्रमजन्य श्वास को रोकने से उत्पन्न हुये उदावर्त्त में विश्राम तथा मांसरसयुक्त अन्न का भोजन करे ॥ ३५ ॥

निद्रावेगविघातोऽथे पिबेत्क्षीरं सितायुतम् । संवाहनं सुशय्याऽत्र हितः स्वप्नः प्रियाः कथाः

निद्राविघातजन्य उदावर्त्त में मिश्रीयुक्त दूध को पीवे तथा हाथ-पैर को मलवाकर सुन्दर विस्तरे पर सोजाय और प्रिय कथाओं का श्रवण करे, ये सब हितकर हैं ॥ ३६ ॥

## अथ रूक्षादिहेतुकुपितवातोत्पन्नोदावर्त्तचिकित्सामाह—

तत्र हिङ्ग्वादिफलवर्तिमाह—

हिङ्गुमाक्षिकसिन्धूत्थैः पिष्टैर्वर्त्ति विनिर्मिताम् । घृताभ्यक्तां गुदे न्यस्येदुदावर्त्तविनाशिनीम् ॥

*वातादिवेगविघातजनितानामुदावर्त्तानां चिकित्सामभिधाय रूक्षादिकुपितवातजनितस्योदावर्त्तस्य चिकित्सामाह—हिङ्ग्विति ॥ ३७ ॥

हींग, मधु तथा सेन्धानमक को पीसकर वर्ति बना ले । तत्पश्चात् इस वर्त्ति को घी से भिगोकर गुदा में रक्खे इससे उदावर्त्त रोग नष्ट हो जाता है ॥ ३७ ॥

मदनफलादिवर्त्तिमाह—

मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः । गुडक्षीरसमायुक्ताः फलवर्त्तिरिहोदिता ॥ ३८ ॥

मैनफल, पिप्पली, कूठ, वच तथा सफेद सरसों इन सब ओषधियों को गुड़ तथा दूध के साथ पीसकर फलवर्त्ति बनाकर गुदा में रखने से उदावर्त्त रोग नष्ट होता है ॥ ३८ ॥

नाराचचूर्णमाह—

खण्डपलं त्रिवृताऽक्षः कृष्णाकर्षो द्वयोश्चूर्णम् । प्राग्भोजनस्य मधुना विडालपदकं नरो लिह्यात्
एतद् गाढपुरीषे देयं विज्ञैरुदावर्त्ते । मधुरं नरपतियोग्यं चूर्णं नाराचकं नाम्ना ॥ ४० ॥

खांड़ ४ तोले, निशोथ १ तोला तथा पिप्पली का चूर्ण १ तोला इन सब ओषधियों को एकत्र मिलादे । इस चूर्ण में से भोजन करने के पहिले १ तोले की मात्रा में लेकर मधु के साथ मिलाकर चाटने से उदावर्त्त रोग नष्ट हो जाता है । जिस उदावर्त्त में मल शुष्क हो गया हो उसमें इस चूर्ण का उत्तम वैद्य उपयोग करे । यह मधुर 'नाराच' नामक चूर्ण राजाओं को खाने लायक है ॥ ४० ॥

गुडाष्टकमाह—

सव्योषपिप्पलीमूलं त्रिवृद्दन्ती च चित्रकम् । तच्चूर्णं गुडसम्मिश्रं भक्षयेत्प्रातरुत्थितः ॥४१॥
एतद् गुडाष्टकं नाम्ना बलवर्णाग्निवर्द्धनम् । उदावर्त्तप्लीहगुल्मशोथपाण्ड्वामयापहम् ॥४२॥

सोंठ, मिर्च, पिप्पली, पिपरामूल, निशोथ, दन्ती तथा चित्त इनके चूर्णको गुड़ मिलाकर प्रातः काल उठते ही खाने से यह 'गुडाष्टक' बल, वर्ण तथा अग्नि की वृद्धि करता है, उदावर्त, प्लीहा, गुल्म, शोथ तथा पाण्डु रोग को नष्ट कर देता है ॥ ४१–४२ ॥

शुष्कमूलकाद्यघृतमाह—

मूलकं शुष्कमार्द्रं च वर्षाभूः पञ्चमूलकम् ॥ ४३ ॥
कृतमालफलं चाप्सु पक्त्वा तेन घृतं पचेत् । तत्पीतं शमयेत्क्षिप्रमुदावर्त्तमशेषतः ॥४४॥

*पञ्चमूलकमत्र बृहत् ॥ ४३–४४ ॥

सूखी अथवा गीली मूली, पुनर्नवा, बृहत् पञ्चमूल तथा अमलतास का गूदा इन ओषधियों के क्वाथ से घी पकाले। इस घी को पीने से तत्काल उदावर्त्त रोग पूर्णतया नष्ट होजाता है ॥

आनाहस्य चिकित्सामाह—

**तुल्यकारणकार्यत्वादुदावर्त्तहरीं क्रियाम्। आनाहेषु च कुर्वीत विशेषश्चाभिधीयते ॥ ४५ ॥**
**त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः। गुडेन तुल्या गुटिका हरत्यानाहमुल्वणम् ॥**

उदावर्त्त तथा आनाह के कारण और कार्य समान हैं अत एव आनाह रोग में उदावर्त्त की ही चिकित्सा करनी चाहिये। तथा जो इसकी विशिष्ट चिकित्सा है उसका वर्णन करते हैं।

निशोथ २ भाग, पिप्पली ४ भाग तथा हरड़ ५ भाग लेकर इनके चूर्ण को समान भाग गुड़ के साथ मिलाकर गोलियां बनाले। इनका सेवन करने से दारुण आनाह नष्ट हो जाता है ॥ ४५-४६ ॥

त्रिकट्वादिवर्तिमाह—

**वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः।**
**मधुनि गुडे वा पक्वैर्विहिता साऽङ्गुष्ठसम्मिता विज्ञैः ॥४७॥**
**वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृताभ्यक्ता।**
**आनाहमुदरजार्त्ति शमयति जठरे तथा गुल्मम् ॥ ४८ ॥**

**इत्येकत्रिंश उदावर्त्तानाहाधिकारः समाप्तः ॥ ३१ ॥**



सोंठ, मिर्च, पिप्पली, सेन्धानमक, सरसों, घरका धुआँ, कूठ तथा मैनफल के चूर्णको मधु अथवा गुड़ के साथ पकाकर अंगूठे के समान वर्ति बनाले। फिर इस वर्ति को घी से भिगोकर धीरे २ गुदा में रख देने से आनाह, उदररोग, गुल्म नष्ट हो जाते हैं। इसका फल प्रत्यक्ष देखा गया है ॥ ४८ ॥

इति भावप्रकाश' भावप्रकाशकारिकायां 'विद्योतिनी' नामिकायां भाषाटीकायां-
मध्यखण्डे चिकित्साप्रकरणे एकत्रिंश उदावर्त्तानाहाधिकारः समाप्तः ॥ ३१ ॥



# अथ द्वात्रिंशो गुल्माधिकारः ॥ ३२ ॥

तत्र गुल्मस्य सन्निकृष्टविप्रकृष्टकारणपूर्वकं सामान्यलक्षणमाह—

दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः। कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥

दुष्टाः स्वकारणैर्मिथ्याहाराध्यशनादिभिः। मिथ्याविहारो = बलवद्विग्रहादिः। पञ्चधेति – वातपित्तकफसन्निपातरक्ता एवं पञ्च। द्वन्द्वजास्तु प्रकृतिसमसमवेतत्वात् पृथग् न गण्यन्ते, अर्शोवत्। कोष्ठान्तः = हृदयाद्बस्तिपर्यन्तं कोष्ठस्तस्य मध्ये, कुत्रापि। ग्रन्थिरूपिणम् = गुटिकाकारम् ॥ १ ॥

अध्यशन (भोजन करने के बाद पुनः थोड़ी देर में भोजन कर लेना) इत्यादि मिथ्या आहार तथा बलवान् के साथ लड़ना इत्यादि मिथ्या विहार से दूषित हुये वात, पित्त, कफ, तथा रक्त कोष्ठ में हृदय से वस्ति तक के भाग में गोली के समान [1]गुल्म को उत्पन्न कर देते हैं। वातज, पित्तज,

---

१. गुल्म को पाश्चात्य वैद्यक में ॲबडामिनल ट्यूमर ( Abdominal tumour ) कहते हैं। ट्यूमर ( Tumour ) प्रायः दो प्रकार के होते हैं—१-सामान्य और २-घातक।

सामान्य ट्यूमर घातक नहीं होते। किन्तु दूसरी प्रकार के ट्यूमर से जीवन का नाश होता है।

सामान्य ट्यूमर के लाइपोमा ( Lipoma ), जन्थोमा ( zanthoma ), काण्ड्रोमा ( Chondroma ), आस्टिओमा ( Osteoma ), माइलोमा ( Myeloma ), मायोमा ( Myoma ), फाईब्रोमा ( Fibroma ), मिक्सोमा ( Myxoma ), ओडोन्टोमा ( Odontoma ), एपीथीलियल ओडोन्टोमा ( Epithelial odontoma ), फालीकुलर ओडोन्टोमा ( Follicular odontoma ), फाईब्रसओडोन्टोमा ( Fibrous odontoma ), तथा कम्पोजिट ओडोन्टोमा ( Composite odontoma ) इत्यादि अनेक भेद होते हैं। इन सब प्रकार के ट्यूमरों में से उदर प्रदेश प्रायः अन्त्रियों में मायोमा ( Myoma ) जाति का ट्यूमर होता है। अतः यहां पर मायोमा ( Myoma ) का कुछ विशिष्ट विवरण दिया जाता है—

मायोमा ( Myoma )—

ये अनैच्छिक मांस-सूत्रों के बने होते हैं। यह उन अङ्गों में अधिक होते हैं जिनमें मांससूत्र के स्तर पाये जाते हैं। आमाशय, अन्त्रियों तथा गर्भाशय इत्यादि में ये ट्यूमर उत्पन्न होते हैं। काटने पर उनके भीतर चारों ओर को जाते हुये सूत्र दिखाई देते हैं। सूत्रों के गुच्छों की स्थिति में विशेष क्रम पाया जाता है, सूत्रों के कोषाणु लम्बे होते हैं और उनके भीतर स्थित केन्द्रक का आकार भी लम्बा होता है। इन पर एक कोष होता है। रक्तसञ्चार भी इनमें अधिक होता है। बहुत बार एक से अधिक अर्बुद भी उपस्थित होते हैं। सामान्यतया इनसे कोई कष्ट नहीं होता। किन्तु जब वह समीपवर्ती अङ्ग पर भार डालते हैं, तब उनमे लक्षण उत्पन्न हो जाते हैं। यह अर्बुद गर्भाशय में अधिक पाया जाता है, जहाँ माँससूत्रों के साथ सौत्रिक धातु भी मिली रहती है। इसके कारण कभी २ गर्भाशय से अत्यन्त रक्तस्राव हो जाता है।

घातक ट्यूमर के दो विशेष प्रकार होते हैं—

१—सारकोमा ( Sarcoma )।

२—कैन्सर ( Cancer )।

इन दोनों भेदों में से अधिकांश में उदर गुहा के भीतर कैन्सर ( cancer ) ही हुआ करता है। अतः स्थानानुसार इसी कैन्सर का ही कुछ विशद विवरण इस स्थल पर दिया जा रहा है।

आमाशय का कैन्सर—

आमाशय में कैन्सर अधिकतर उस भाग में पाया जाता है जो पक्वाशय के पास रहता है, यद्यपि

कफज, त्रिदोषज तथा रक्तज भेद से गुल्म पांच प्रकार का होता है। प्रकृतिसमसमवेत होने के कारण अर्श के समान द्वन्द्वज इत्यादि गुल्मों का परिगणन नहीं किया जाता है।

---

अन्य भागों में भी होता है। प्रायः कैन्सर आमाशय में पूर्वजात व्रण पर उत्पन्न होता है कभी २ कैन्सर सारे आमाशय में फैल जाता है। जिससे आमाशय की विस्तार या सङ्कोच की शक्ति जाती रहती है। साधारणतया यह ट्यूमर एक कठिन ग्रन्थि के समान उत्सेध के रूप में प्रारम्भ होता है किन्तु उसकी वृद्धि तीव्र गति से होती है और शीघ्र ही उस पर अङ्कुर तथा व्रण दोनों उत्पन्न हो जाते हैं। आमाशय की धाराओं पर जो लसीकाग्रन्थियाँ स्थित होती हैं वे भी आक्रान्त हो जाती हैं। कुछ समय में ट्यूमर समीपवर्ती अङ्गों के साथ संयुक्त हो जाता है।

लक्षण—

इसके दो विशेष लक्षण हैं:-पीडा और वमन।

प्रारम्भ में उदर में हल्की २ पीडा होती है, कुछ समय के पश्चात् पीडा बढ़ जाती है और अन्त में अत्यन्त दारुण पीडा होने लगती है जो प्रत्येक समय में होती रहती है। भोजन से पीडा प्रायः बढ़ जाती है, किन्तु कभी-कभी घटती भी देखी गई है।

प्रथम रोगी को खट्टी डकार आती है। कुछ समय में वमन आरम्भ हो जाता है। वमन का रङ्ग काफी के समान मैला लाल होता है। इस रङ्ग का कारण वह रक्त होता है जो अर्बुद के व्रणों से निकलता है रोगी को भूख नहीं मालूम होती उसका पाचन बिगड़ जाता है। भोजन पचता नहीं। शरीर कृश होने लगता है। रोगी अत्यन्त दुर्बल हो जाता है और अन्त में उसकी मृत्यु हो जाती है। परीक्षा करने पर उदरभित्तियों के नीचे आमाशय प्रान्त में ट्यूमर (गुल्म) प्रतीत होता है किन्तु कभी २ अन्त समय तक नहीं मालूम होता। वमन में प्रायः ट्यूमर के टुकड़े टूट २ कर निकलते हैं। इसकी परीक्षा सूक्ष्मदर्शक यन्त्र से हो जाती है।

अन्त्रियों का कैन्सर—यह ट्यूमर क्षुद्रान्त्रियों में बहुत कम होता है किन्तु बृहदन्त्र में बहुधा पाया जाता है। यहाँ गुल्म या ट्यूमर शीघ्रता से वृद्धि करता है जिससे थोड़े ही समय में आन्त्र के भीतर का स्थान ट्यूमर से भर जाता है। कभी २ ट्यूमर आन्त्र के बाहर चारों ओर से घेर लेता है। जिससे आन्त्र के किसी विशेष स्थान पर ट्यूमर का एक कुण्डल-सा बन जाता है और भीतर से आन्त्र के मार्ग में संकीर्णता आजाती है। कभी २ ट्यूमर इतना बढ़ता है कि वह आन्त्र के मार्ग को पूर्णतया अवरुद्ध कर देता है। उसके द्वारा एक तिनका निकलना भी कठिन हो जाता है। इस स्थान से ऊपर का मार्ग विस्तृत हो जाता है। श्लैष्मिक कला में वृद्धि हो जाती है और वहां व्रण उत्पन्न हो जाते हैं। कुछ समय में पास के अन्य अङ्गों के साथ जुड जाता है और लसीका ग्रन्थियों में अर्बुद की गौणवृद्धियां होने लगती हैं। कैन्सर के कोषाणु बहुत दूर तक फैल जाते हैं।

लक्षण—प्रारम्भ में लक्षण निश्चित नहीं होते। रोगी को कभी कोष्ठबद्धता हो जाती है और कभी दस्त आने लगते हैं। कभी उसको उदरशूल के समान पीडा होती है। मल के साथ रक्त और श्लेष्मा निकलते हैं। रोगी की शारीरिक दशा क्षीण हो जाती है। कुछ समय के पश्चात् रोगी को बद्धान्त्र होकर उसकी मृत्यु हो जाती है।

यदि परीक्षा करने पर उदर में गुल्म प्रतीत हो अथवा बद्धान्त्र के बार २ आक्रमण हों और उदर किसी विशेष स्थान पर फूला हुआ प्रतीत हो तथा उदर की भित्तियाँ कड़ी हो गई हों तो शस्त्रकर्म द्वारा तुरन्त चिकित्सा करनी चाहिये। ट्यूमर का प्रथम उदर में चलायमान होना तथा कुछ समय के बाद स्थिर हो जाना अत्यन्त संदेहजनक है। यदि ट्यूमर का तनिक भी सन्देह हो तो उचित परीक्षा द्वारा शीघ्र ही निर्णय करके जितना जल्दी हो सके आन्त्र के आक्रान्त भाग को काट कर निकाल देना चाहिये।

पञ्चविधत्वं विवृणोति—

**स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः । पुरुषाणां तथा स्त्रीणां रक्तजश्चोपजायते ॥ २ ॥**

ये गुल्म पुरुषों तथा स्त्रियों के दुष्ट वात, पित्त तथा कफ और सन्निपात तथा रक्त से उत्पन्न होते हैं ॥ २ ॥

आर्त्तवोत्पन्नगुल्ममाह—

**आर्त्तवादपि गुल्मः स्यात्स तु स्त्रीणां प्रजायते । अन्यस्त्वसृग्भवः पुंसां तथा स्त्रीणां प्रजायते ॥**

***आर्त्तवरूपादपि रक्ताद् गुल्मो भवतीत्याह-आर्तवादिति ॥ ३ ॥**

आर्त्तव से भी गुल्म उत्पन्न होता है किन्तु यह गुल्म केवल स्त्रियों को ही होता है। और दूसरे रक्त से उत्पन्न होने वाले गुल्म पुरुषों तथा स्त्रियों दोनों को होते हैं ॥ ३ ॥

कोष्ठेऽपि स्थाननियममाह—

**तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः ॥ ४ ॥**

उस गुल्म के दोनों पार्श्व, हृदय, नाभि तथा मूत्राशय ये पांच स्थान होते हैं ॥ ४ ॥

गुल्मस्य सामान्यलक्षणमाह—

**हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः । वृत्तश्चयोपचयवान्स गुल्म इति कीर्त्तितः ॥**

***नाभिशब्देन वस्तिर्बोध्यः, सामीप्यादेव, यथा गङ्गायां घोष इति । वस्तेरपि गुल्माश्रयत्वेनोक्तत्वाद्, अन्ये तु 'हृद्वस्त्योरेव' इति पाठान्तरं पठन्ति । अन्ये तु-'वस्तौ विद्रधिः स्यान्न गुल्म' इति, तन्न, वस्तेरपि गुल्मस्थानत्वात् । तथा च चरके—**

**'पञ्च स्थानानि गुल्मस्य पार्श्वहृन्नाभिवस्तयः' । इति ।**

**सञ्चारी = चलनशीलः । अचलः = स्थिरः । वृत्तो = वर्तुलः । चयोपचयवानिति—कदाचिच्चीयते = वृद्धिं गच्छति, कदाचिदपचीयते = हीनो भवति । 'एतल्लक्षणं सामान्योक्तमपि वातिके व्यवतिष्ठत' इति जेज्जटः । गयदासस्तु सामान्यमेवाह, सर्वगुल्मानां वातमूलत्वात् ॥ ५ ॥**

हृदय तथा नाभि के बीच में सञ्चरणशील अथवा अचल तथा बढ़ने घटनेवाली जो गोलाकार ग्रन्थि होती है उसे गुल्म कहते हैं । यहां पर नाभि शब्द से वस्ति जानना चाहिये । क्योंकि नाभि वस्ति के समीप है । जैसे कि 'गङ्गा में घोष है' इस वाक्य में 'गङ्गा में' इससे गङ्गा के किनारे रहने वाला ऐसा बोध होता है । उसी प्रकार नाभि से वस्ति का बोध होता है । क्योंकि वस्ति गुल्म का स्थान है । कुछ वैद्य 'हृदय तथा वस्ति के बीच में होता है' ऐसा पाठ पढ़ते हैं और कुछ वैद्य यह कहते हैं कि 'वस्ति में विद्रधि होता है गुल्म नहीं होता है' । किन्तु यह बात ठीक नहीं ।

---

अब तक गुल्म के सम्बन्ध में जो मायोमा ( Myoma ) तथा कैन्सर ( Concer ) का वर्णन किया गया है । वे वस्तुतः गुल्म के लक्षणों से बराबर मिलते हैं । यथा—गोलाकार प्रतीति, कदाचित् शूल तथा चलायमान या स्थिर होना, आध्मान, मलावरोध इत्यादि । जैसा कि अपने यहां भी गुल्म का यों ही लक्षण तथा पूर्वरूप का वर्णन किया गया है । यथाः—

सामान्यलक्षणं—

'हृन्नाभ्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः । वृत्तश्चयोपचयवान् स गुल्म इति कीर्त्तितः' ।

गुल्म का पूर्वरूप—

उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपक्तिशूलमासन्नगुल्मस्य वदन्ति चिह्नम् ॥

तथा—

अरुचि कृच्छ्रविण्मूत्रवातत्वं चान्त्रकूजनम् । आनाहं चोर्ध्ववातश्च सर्वगुल्मेषु लक्षयेत् ।

क्योंकि वस्ति भी गुल्म का स्थान है। जैसा कि चरक में पाठ आता है कि 'गुल्म के दोनों पार्श्व, हृदय, नाभि तथा वस्ति ये पाँच स्थान हैं'।

उपर्युक्त लक्षण यद्यपि सामान्य रीति से कहे गये हैं तथापि ये लक्षण वातज गुल्म में ही मिलते हैं ऐसा जेज्जट का मत है। किन्तु गयदास कहते हैं कि सम्पूर्ण गुल्मों के ये साधारण लक्षण हैं क्योंकि सब गुल्मों का मूल कारण वात ही है ॥ ५ ॥

गुल्मस्य पूर्वरूपमाह—

**उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।**
**आटोपमाध्मानमपक्तिशूलमासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ६ ॥**

डकारों की अधिकता, विबन्ध, तृप्ति, बलनाश, आन्त्रकूजन, पेट में गुड-गुड शब्द का होना, आध्मान, अन्न का परिपाक न होने के कारण शूल, ये सब आसन्न गुल्म के चिह्न हैं ॥ ६ ॥

**अरुचिं कृच्छ्रविण्मूत्रवातत्वं चान्त्रकूजनम् । आनाहं चोर्ध्ववातञ्च सर्वगुल्मेषु लक्षयेत् ॥७॥**

अरुचि, मल, मूत्र तथा वात का कष्टपूर्वक निःसरण, आन्त्रकूजन, आनाह तथा डकारों का आना ये लक्षण सम्पूर्ण गुल्मों में होते हैं ॥ ७ ॥

वातिकगुल्मनिदानमाह—

**रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ।**
**शोकाभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥ ८ ॥**

***विचेष्टनं=विरुद्धा चेष्टा बलवद्भिग्रहादिः । शोकाभिघातः=शोकेन मनोऽधिष्ठानस्य हृदयस्याभिघातः । अतिमलक्षयो विरेकादिना । निरन्नता=उपवासः ॥ ८ ॥**

रूक्ष, विषम तथा अधिक मात्रा में भोजन करने से, बलवान् पुरुषों के साथ लड़ना इत्यादि विरुद्ध चेष्टा करने से, मल-मूत्र इत्यादि के वेगों को रोकने से, शोक के कारण, मनोऽधिष्ठान हृदय में चोट लगने से, विरेचन इत्यादि से, मल के अत्यन्त क्षय होने से तथा उपवास करने से वातज गुल्म उत्पन्न होता है ॥ ८ ॥

वातिकगुल्मलक्षणमाह—

**यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम् ।**
**श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वाङ्गशिरोरुजञ्च ॥ ९ ॥**
**करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।**
**वातात्स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥ १० ॥**

***श्यावारुणत्वं शरीरस्य । शिशिरज्वरं=शीतज्वरम् । जीर्णे आहारे प्रकुप्यति, भुक्ते च शान्तिं गच्छति, स वातिको गुल्मः । रूक्षः=आहारः । कषायतिक्तकटुरसाः । तत्र=तस्मिन्वातगुल्मे, नोपशेते=न सुखयति ॥ ९-१० ॥**

जिस गुल्म में स्थान २ में पीड़ा, मल तथा अपान वायु का अवरोध, गले तथा मुख का सूखना, शरीर के वर्ण का नीला तथा रक्त वर्ण हो जाना, शीतज्वर, हृदय, कुक्षि, पसलियों, शरीर तथा सिर में पीड़ा, अन्न के जीर्ण हो जाने पर अधिक प्रकोप तथा भोजन कर चुकने पर गुल्म का मृदु हो जाना ये लक्षण हों तो उसे वातजन्य गुल्म समझना चाहिये। इस गुल्म में रूक्ष, कसैले, तिक्त तथा कटु पदार्थों का भोजन सुखकर नहीं होता ॥ ९-१० ॥

पैत्तिगुल्मनिदानमाह—

**कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।**
**आमोऽभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥ ११ ॥**

***विदाहि=वंशकरीरादि । अतिशब्दो मद्यादिषु योज्यः । आमोऽत्र विदग्धाजीर्णबोधकः । अभिघातो लगुडादिना ॥ ११ ॥**

कटु, अम्ल, तीक्ष्ण, उष्ण, वंशकरीर इत्यादि विदाही तथा रूक्ष पदार्थों का सेवन, क्रोध, अत्यन्त मद्यपान तथा धूप का सेवन, विदग्धाजीर्ण, लाठी इत्यादि का चोट तथा दूषित हुआ रक्त, ये पैत्तिक गुल्म के कारण हैं ॥ ११ ॥

पैत्तिकगुल्मलक्षणमाह—

**ज्वरः पिपासा सदनाङ्गरागौ शूलं महज्जीर्यति भोजने च ।**
**स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ १२ ॥**

***अङ्गरागः = देहस्य लौहित्यम् । जीर्यति भोजने च विदाहो, व्रणवच्च गुल्मः स्पर्शासहः, पैत्तिकगुल्मरूपम् ॥ १२ ॥**

ज्वर, पिपासा, ग्लानि, अङ्गों का रक्तवर्ण हो जाना, भोजन की पच्यमानावस्था में महाशूल, स्वेद, प्रचण्ड दाह तथा जो गुल्म व्रण के समान स्पर्श को न सह सके ये सब पैत्तिक गुल्म के लक्षण हैं ॥

श्लैष्मिकसान्निपातिकयोर्गुल्मयोः कारणमाह—

**शीतं गुरु स्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च ।**
**गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दुष्टो निचयात्मकस्य ॥ १३ ॥**

***सम्पूरणम् = उदरपूरणम् । निचयात्मकस्य=सान्निपातिकस्य । सर्वो हेतुः=वातपित्तकफानां हेतुः ॥ १३ ॥**

शीतल, गुरु तथा स्निग्ध आहार का सेवन, परिश्रम न करना, खूब भोजन करना तथा दिन में सोना ये सब कफज गुल्म के हेतु हैं । तथा उपर्युक्त सभी कारणों के समुदाय से सान्निपातिक गुल्म होता है ॥ १३ ॥

श्लैष्मिकगुल्मलक्षणमाह—

**स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ।**
**कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफकोपजाते ॥ १४ ॥**

***कफस्य लिङ्गानि = वेदनाऽल्पतावह्निमान्द्यादीनि ॥ १४ ॥**

कफजन्य गुल्म में शरीर की आर्द्रता, शीतज्वर, शरीरका ढीला रहना, हल्लास, खांसी, अरुचि, शरीर की गुरुता तथा अल्प वेदना और अग्निमान्द्य इत्यादि लक्षण होते हैं ॥ १४ ॥

द्वन्द्वजगुल्मलक्षणमाह—

**व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनाऽर्थम् ॥ १५ ॥**

***सान्निपातिके सर्वो हेतुरुपलक्षणम्—व्यामिश्रेति ॥ १५ ॥**

ओषधिकल्पना के लिए सम्मिलित लक्षणों को देखकर वातपित्त-जन्य, वातकफ-जन्य तथा कफपित्त-जन्य गुल्मों की कल्पना कर लेनी चाहिये ॥ १५ ॥

त्रिदोषजगुल्मलक्षणमाह—

**महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ।**
**मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ १६ ॥**

***दाहपरीतं=दाहेन व्याप्तसकलदेहम् । शीघ्रविदाहि=शीघ्रविदग्धाजीर्णकरम् । दारुणं=मारकम् । मनोऽपहारिणं = मनोवैक्लव्यकारकम् । शरीरापहारिणं = शरीरस्य कार्श्यकरम् ॥**

त्रिदोषज गुल्म में अत्यन्त वेदना तथा सम्पूर्ण शरीर में दाह होता है । गुल्म पत्थर के समान घन तथा ऊपर को उभड़ा रहता है । शीघ्र विदग्धाजीर्ण को उत्पन्न करता है । मन को विकृत, शरीर को कृश तथा अग्निबल को नष्ट कर देता है । तथा इससे मृत्यु हो जाती है । यह गुल्म असाध्य है ॥ १६ ॥

आर्त्तवरूपरक्तजगुल्मलक्षणमाह—

**नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ।**
**वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥ १७ ॥**

पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध ।
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ १८ ॥

*नवप्रसूता = प्रकृताग्निबलवर्णमांसहीना, अहितभोजना । या चामगर्भं विसृजेत् = नवममासादर्वाक् प्रसूयते, साऽप्यहितभोजना । ऋतौ वा आर्त्तववृत्तिकालेऽहितभोजना । अपथ्याचरणाद्वा वायू रक्तं परिगृह्य गुटिकाऽऽकारं गर्भाशये गुल्मं करोति । भोजनपदं विहारस्याप्युपलक्षणम् । यतश्चाह चरकः—

'ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रिया रक्तभवोऽभ्युपैति' ॥ १ ॥

यदि नवप्रसूता स्त्री ( इस समय स्वाभाविक अग्नि, बल, वर्ण तथा मांस का ह्रास हो जाता है ) अहित आहार तथा विहार को करती है । अथवा जो स्त्री आमगर्भ के गिर जाने के बाद अहित आहार-विहार करती है या जो स्त्री ऋतुकाल में अहितकर आहार तथा विहार का सेवन करती है उस स्त्री के रक्त को वायु ग्रहण करके दाह तथा पीड़ा युक्त, पैत्तिक गुल्म के समान चिह्नवाले रक्त[1] गुल्म को उत्पन्न कर देती है । यद्यपि उपर्युक्त श्लोक में 'अहितभोजना' यही शब्द आया है तथापि यहां पर 'भोजन' शब्द से 'विहार' का भी उपलक्षण हो जाता है । जैसा कि भगवान चरक ने भी कहा है-ऋतुकाल में उपवास करने से, भय से, रूक्ष पदार्थों के सेवन से, मल-मूत्र इत्यादि के वेगों को रोकने से, स्तम्भन करने से, लेखन करने से तथा योनिदोष से स्त्रियों को रक्तजन्य गुल्म उत्पन्न होता है ॥ १ ॥

*धातुरूपरक्तजस्यापि विप्रकृष्टनिदानानि लक्षणानि च पैत्तिकस्येव बोद्धव्यानि । परमत्राभिघातादिर्हेतुविशेषः । चिरात् स्पन्दते = चलति । नाङ्गैः = न हस्तपादाद्यैः । समगर्भलिङ्गः=अत्र समशब्दः सर्वशब्दार्थः, तेन समानि=सर्वाणि, गर्भलिङ्गानि=आर्त्तवप्रवृत्तिकाले 'आर्त्तवादर्शन-मुखपीतता-स्तनमुखकृष्णता-दोहदादीनि यत्र सः । एते च व्याधिप्रभावाद्, यथा यक्ष्मिणो रिरंसा । स रौधिरः=आर्त्तवरूपरक्तजः स्त्रीणां प्रजायत इति । गर्भसमानलिङ्गत्वे विशेषज्ञानार्थमाह—'मासे व्यतीते दशमे चिकित्स्यः' । नवमदशममासयोः प्रसवकालत्वादित्येके, तन्न 'यः स्पन्दते पिण्डित एव नाङ्गैरि'त्यादिनैव संशयस्य निराकृतत्वात् । गर्भः प्रत्यङ्गैर्निरन्तरं निःशूलं स्पन्दते गुल्मश्चैतद्विपरीत इति । किञ्च—'नवमे दशमे प्रसूयत' इत्युत्सर्गो न तु नियमः । तदधिककालेऽपि प्रसवदर्शनादागमाच्च । यत आह चरकः—

'तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टं यदा वर्षगणैरपि स्यात् ॥ २ ॥

धातुरूप रक्त से उत्पन्न गुल्म का विप्रकृष्ट निदान तथा लक्षण पैत्तिक गुल्म के ही समान होता है । किन्तु रक्तगुल्म अभिघात इत्यादि हेतुविशेष से होते हैं । इस रक्तगुल्म की और जो विशेषतायें हैं उन्हें सुनियेः—जिस समय सदा रजःस्राव होता था उस समय रज का न दिखाई देना, मुख का पीलापन, स्तनों के चूचुकों का कालापन तथा दोहद ( भिन्न २ वस्तुओं को खाने तथा न खाने की इच्छा ) इत्यादि गर्भ के चिह्न व्याधिप्रभाव से इस गुल्म में दीखते हैं । जैसे कि व्याधिप्रभाव से यक्ष्मारोग से पीड़ित मनुष्य में स्त्रीप्रसङ्ग की इच्छा होती है । इसमें स्पन्दन पिण्ड ही द्वारा होता है हाथ-पैर इत्यादि अङ्गों द्वारा नहीं होता है । यह स्पन्दन बहुत समय में होता है

१. पाश्चात्त्य वैद्यक में रक्तगुल्म के सम्बन्ध में कोई पर्यायवाचक शब्द नहीं है। किन्तु गर्भाशय के भीतर जो भिन्न २ प्रकार के ट्यूमर होते हैं । प्रायः वे ही रक्तगुल्म कहलाते हैं । इनमें से मायोमा ( Myoma ), फायब्रोमा (Fibroma) तथा कैन्सर (Cancer) विशेष महत्त्व के होते हैं ।

तथा शूलयुक्त होता है। यह गुल्म स्त्रियों में ही उत्पन्न होता है और यह रजोरूप रक्त से उत्पन्न होता है। इसकी चिकित्सा १० महीने के बाद करनी चाहिये। कुछ लोग कहते हैं कि—नवां तथा दशवां महीना प्रसव काल है इसलिए दशवें महीने के व्यतीत हो जाने के पश्चात् चिकित्सा करनी चाहिये। यह मत ठीक नहीं क्योंकि यह गुल्म हाथ-पैरों द्वारा नहीं चलता बल्कि पिण्डाकारस्वरूप में तथा विलम्ब में चलता है और इसमें शूल होता है किन्तु गर्भ प्रत्येक अङ्गों से निरन्तर शूल रहित स्पन्दन करता है इन सब उपर्युक्त सिद्धान्तों से गर्भ के सन्देह को निर्मूल किया जा सकता है इसके अलावे प्रसव नवें तथा दशवें महीने में हो यह भी कोई नियम नहीं है। इससे अधिक समय व्यतीत होने के पश्चात् प्रसव होते देखा गया है तथा ग्रन्थों द्वारा भी यह मत प्राप्त है। जैसा कि भगवान् चरक ने कहा है कि—'स्त्री गर्भ-धारण करने के बहुत समय पश्चात् अर्थात् कई वर्षों के बाद भी गर्भ को उत्पन्न करती है, वह बालक पुष्ट होता है' ॥ २ ॥

***तस्माद्—'मासे व्यतीते दशमे चिकित्स्य' इति न संशयव्यवच्छेदार्थं किन्तु तदा सुखेन चिकित्साऽर्थम् , यत उक्तम्—**

**'रक्तगुल्मपुराणत्वं सुखसाध्यस्य लक्षणम्'।**

**पुराणता चास्य दशमासातिक्रमेणैव भवति। जेज्जटेनाप्युक्तम्। 'दशमासोपरि पिण्डिते गुल्मे स्नेहादिनोपस्कृतदेहाया न गर्भाशयक्षतिमादधाति रक्तभेदनमिति ॥ १७-१८ ॥**

इसलिये 'दशवें महीने के व्यतीत होने के पश्चात् चिकित्सा करनी चाहिये' जो यह कथन है वह गर्भ के संशय को दूर करने के लिए नहीं कहा गया है बल्कि रक्त गुल्म की दशवें महीने के बाद सुखपूर्वक चिकित्सा हो सकती है ऐसा समझना चाहिये। जैसा कि कहा भी है—'रक्तगुल्म का पुरानापन सुखसाध्य का लक्षण है'।

दशवां महीना व्यतीत हो जाने पर रक्तगुल्म पुराना माना जाता है। जेज्जट भी कहते हैं कि—'दश महीने के बाद स्नेह इत्यादिसे संस्कारित शरीरवाली स्त्री के पिण्डित गुल्म में रक्तभेदन करने से स्त्री के गर्भाशय को किसी प्रकार की क्षति नहीं पहुंचती है ॥ १७-१८ ॥

असाध्यगुल्मलक्षणमाह—

**सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः। कृतमूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥१९॥**
**दौर्बल्यारुचिहृल्लासकासच्छर्द्यरतिज्वरैः। तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥२०॥**

***महावास्तुपरिग्रहः = व्यापकतया बृहत्स्थलं गृह्णाति। युज्यते=युक्तो भवति ॥१९-२०॥**

जो गुल्म क्रमतः सञ्चित होकर बहुत अधिक स्थान को घेर लिया हो, शूल करता हो, शिराओं से बंधा हुआ कछुवे के समान ऊँचा हो और जो दुर्बलता, अरुचि, हृल्लास, कास, वमन, आन्त्र ज्वर, पिपासा, तन्द्रा तथा प्रतिश्याय से युक्त हो वह गुल्म असाध्य होता है ॥ १९-२० ॥

अपरञ्च—

**गृहीत्वा सज्वरश्वासं छर्द्यतीसारपीडितम्। हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥२१॥**

***कर्षति = मारणाय कर्षति ॥ २१ ॥**

ज्वर, श्वास, वमन तथा अतीसार से पीड़ित तथा हृदय, नाभि, हाथ और पैर में शोथयुक्त रोगी को गुल्म मार डालता है ॥ २१ ॥

अपरञ्च—

**श्वासः शूलं पिपासाऽन्नविद्वेषो ग्रन्थिमूढता। जायते दुर्बलत्वञ्च गुल्मिनो मरणाय वै ॥२२॥**

***ग्रन्थिमूढता = ग्रन्थिरूपस्य गुल्मस्याकस्माद्विलयनम् ॥ २२ ॥**

श्वास, शूल, पिपासा, अन्न में अरुचि, गुल्म का अकस्मात् विलीन हो जाना तथा दुर्बलता ये सब गुल्म रोगी को मार डालने के लिये उत्पन्न होते हैं ॥ २२ ॥

गुल्मचिकित्सामाह—

**वातारितैलेन पयोयुतेन पथ्यासमेतेन विरेचनं हि।**
**संस्वेदनं स्निग्धमतिप्रशस्तं प्रभञ्जनक्रोधकृते च गुल्मे ॥ २३ ॥**

प्रकुपित वातजन्य गुल्म में दूध तथा हरड़ चूर्ण के साथ एरण्ड तैल द्वारा विरेचन देना तथा स्निग्ध पदार्थों से स्वेदन करना प्रशस्त है ॥ २३ ॥

**स्वर्जिकाकुष्ठसहितः क्षारः केतकसम्भवः। पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम् ॥२४॥**

सज्जीखार, कूठ तथा केतकी के क्षार को तेल में मिलाकर पीने से वातजन्य गुल्म शान्त हो जाता है ॥ २४ ॥

**तित्तिरांश्च मयूरांश्च कुक्कुटान्क्रौञ्चवर्त्तकान्। सर्पिः शालिं प्रसन्नाञ्च वातगुल्मे प्रयोजयेत् ॥**

वातजन्य गुल्म में तीतर, मोर, मुरगा, क्रौञ्च तथा बटेर का मांस, घी, शालि चावल तथा प्रसन्ना नामक मद्य का प्रयोग करना चाहिये ॥ २५ ॥

**पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना। विरेकाय सितायुक्तं कम्पिल्लं वा समाक्षिकम् ॥**
***त्रिफलाऽम्बुना = त्रिफलाक्काथेन। कम्पिल्लकं = 'कबीला' इति लोके ॥ २६ ॥**

पैत्तिक गुल्म में विरेचन के लिये त्रिफला के क्वाथ के साथ निशोथ का चूर्ण खिलाना चाहिये। अथवा मधु के साथ कबीले का सेवन करे ॥ २६ ॥

**अभयां द्राक्षया खादेत्पित्तगुल्मी गुडेन वा। योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत्।**
**अपरैश्च बलासघ्नैर्युक्तियुक्तैः शमं नयेत् ॥ २७ ॥**

पैत्तिक गुल्म का रोगी मुनक्का अथवा गुड के साथ हरड़ को खाय तो पैत्तिक गुल्म शान्त हो जाता है।

कफज गुल्म में वातजन्य गुल्म को नष्ट करनेवाले योगों का प्रयोग करें तथा कफघ्न अन्य योगों को युक्तिपूर्वक प्रयुक्त करके कफज गुल्म को शान्त करना चाहिये ॥ २७ ॥

हिङ्ग्वादिचूर्णमाह—

**हिङ्गुग्रन्थिकधान्यजीरकवचाचव्याग्निपाठाशटीवृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम्**
**पथ्यापौष्करवेतसाम्लहवुषाऽजाज्यस्तदेभिः कृतं चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः**
**गुल्माध्मानगुदाङ्कुरान्ग्रहणिकोदावर्त्तसंज्ञं गदं प्रत्याध्मानगरोदराश्मरियुतांस्तूनीद्वयारोचकान्**
**ऊरुस्तंभमतिश्रमं च मनसो बाधिर्यमष्ठीलिकां प्रत्यष्ठीलिकया सहापहरते प्राक्पीतमुष्णाम्बुना**
**हृत्कुक्षिवङ्क्षणकटीजठरान्तरेषु वस्तिस्तनांसफलकेषु च पार्श्वयोश्च।**
**शूलानि नाशयति वातबलासजानि हिङ्ग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम् ॥ ३० ॥**

हींग, पिपरामूल, धनिया, जीरा, वच, चव्य, चित्त, पाठा, कचूर, विसांविल, तीनोनमक, सोंठ मिर्च, पिप्पली, जवाखार, सज्जीखार, अनार के दाने, हरड़, पोहकरमूल, अम्लवेत, हाऊवेर तथा काला जीरा इन सब ओषधियों का चूर्ण बनाकर अदरख के रस तथा बिजौरे नीबू के रस की भावना देकर तैयार करले। इस चूर्ण को गरम जल के साथ खाने से गुल्म, आध्मान, अर्श, ग्रहणी, उदावर्त्त, प्रत्याध्मान, गरविष, उदर रोग, अश्मरी, तूनी, प्रतितूनी, अरुचि, ऊरुस्तम्भ, मनका अत्यन्त भ्रम, बधिरता, अष्ठीला तथा प्रत्यष्ठीला ये सब रोग तत्काल नष्ट हो जाते हैं।

यह आश्विनसंहिता में कहा गया 'हिङ्ग्वाद्यचूर्ण' हृदय, कुक्षि, वंक्षणसन्धि, कटि, उदर, वस्ति, स्तन प्रदेश, कन्धे तथा दोनों पसलियों में होने वाले वातकफजन्य शूलों को नष्ट कर देता है ॥ २८–३० ॥

**धीमानुपाचरेद् गुल्मं प्रत्याख्याय त्रिदोषजम्। सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥**

बुद्धिमान् वैद्य प्रत्याख्यान करके अर्थात् रोगी त्रिदोषजन्य गुल्म से पीडित है यह रोग असाध्य

होता है, ऐसा कहकर त्रिदोषज गुल्म की चिकित्सा करे। इस सान्निपातिक गुल्म में त्रिदोषनाशक चिकित्सा हितकारिणी होती है ॥ ३१ ॥

**शरपुङ्खस्य लवणं पथ्याचूर्णं समं द्वयम्। शाणप्रमाणमश्नीयाच्चूर्णं गुल्मगदापहम् ॥३२॥**

शरपुङ्खा के क्षार तथा हरड के चूर्ण को समान भाग में मिलाकर ४ माशे की मात्रा में सेवन करने से गुल्म नष्ट हो जाता है ॥ ३२ ॥

**स्वर्जिका शाणमाना स्यात्तावदेव गुडं भवेत्। उभयोर्वटिकां खादेद् गुल्मामयविनाशिनीम्**

सज्जीखार १ शाण ( ४ माशे ) तथा उतना ही गुड़ मिलाकर गोली बनाकर खाने से गुल्म रोग नष्ट हो जाता है ॥ ३३ ॥

क्षाराष्टकमाह—

**पलाशवज्रीशिखरिचिञ्चाऽर्कतिलनालजाः। यवजः स्वर्जिका चेति क्षारा ह्यष्टौ प्रकीर्त्तिताः।**
**एते गुल्महराः क्षारा अजीर्णस्य च पाचकाः ॥ ३४ ॥**

पलाश, थूहर, अपामार्ग, इमली, मदार, तिल, जौ इनका क्षार तथा सज्जीखार ये 'क्षाराष्टक' कहलाते हैं। ये गुल्म को नष्ट करते हैं तथा अजीर्ण के पाचक हैं ॥ ३४ ॥

वज्रक्षारमाह—

**सामुद्रं सैन्धवं काचं यवक्षारं सुवर्चलम्। टङ्कणं स्वर्जिकाक्षारतुल्यं चूर्णं प्रकल्पयेत् ॥ ३५ ॥**
**वज्रीक्षीरैरर्कक्षीरैरातपे भावयेत् त्र्यहम्। वेष्टयेदर्कपत्रेण रुद्ध्वा भाण्डे पुटे पचेत् ॥ ३६ ॥**
**तत्क्षारं चूर्णयेत्पश्चात्त्र्यूषणं त्रिफला तथा। यवानी जीरको वह्निश्चूर्णमेषाञ्च कारयेत् ॥ ३७ ॥**
**सर्वचूर्णसमं क्षारं सर्वमेकत्र कारयेत्। तच्चूर्णं टङ्कयुगलं सलिलेन प्रयोजयेत् ॥ ३८ ॥**
**गुल्मे शूले तथाऽजीर्णे शोथे सर्वोदरेषु च। मन्दे वह्नावुदावर्त्ते प्लीह्नि चापि परं हितम् ॥**
**वातेऽधिके जलैः कोष्णैर्हितं पित्तेऽधिके घृतैः। गोमूत्रेण कफाधिक्ये काञ्जिकेन त्रिदोषजे ॥**
**वज्रक्षार इति ख्यातः प्रोक्तः पूर्वं स्वयम्भुवा। सेवितो हरतेऽजीर्णं तथाऽजीर्णभवान्गदान् ॥**

सामुद्रनमक, सेन्धानमक, कचियानमक, जवाखार, कालानमक, सोहागा तथा सज्जीखार इन सब को समान मात्रा में लेकर चूर्ण बनाले। फिर इस चूर्णको थूहर के दूध तथा मदार के दूध से धूप में ३ दिन तक भावना दे। तत्पश्चात् उसका गोला बनाकर मदार के पत्तों से लपेट कर हंडिया में रखकर उसका मुंह बन्द करके अग्नि में पकाले। तत्पश्चात् उसका चूर्ण कर डाले। फिर सोंठ, मिर्च, पिप्पली, हरड़, बहेड़ा, आंवला, अजवायन, जीरा तथा चित्त इन ओषधियों का चूर्ण बनाले। तदनन्तर इस चूर्ण के बराबर क्षार चूर्ण को लेकर एक में मिलादे। फिर इस चूर्णको २ टङ्क ( ८ माशे ) की मात्रा में पानी के साथ उपयोग करे। इससे गुल्म, शूल, अजीर्ण, शोथ, सब प्रकार के उदररोग, मन्दाग्नि, उदावर्त्त तथा प्लीहा ये रोग अच्छी तरह से दूर होजाते हैं। वाताधिक्य में उष्ण जल के साथ, पित्त की अधिकता में घी से, कफ की अधिकता में गोमूत्र से तथा त्रिदोषज में काञ्जी के साथ सेवन करना चाहिये। प्राचीन काल में ब्रह्माजीके कहे हुये इस 'वज्रक्षार' के सेवन से अजीर्ण तथा अजीर्णजन्य व्याधियां नष्ट होजाती हैं ॥ ३५-४१ ॥

**सुवर्चिका टङ्कमिता तत्समानाऽऽर्द्रिकाऽपि च। उभे भुञ्जीत युगपद् गुल्मामयनिवृत्तये ॥**

*सुवर्चिका = 'सोरा' इति लोके ॥ ४२ ॥

गुल्मरोग की शान्ति के लिये ४ माशे सोरा तथा अदरख चार माशे इनको एक साथ खावे ॥

**शुक्तिचूर्णस्य गुटिकां टङ्कमात्रां सुवेष्टयेत्। गुडेन शाणमानेन तां लिहेद् गुल्मरोगवान् ॥**

गुल्म रोगी शुक्तिभस्म की ४-४ माशे की गोलियां बना ले। इनमें से १-१ गोली को ४ माशे गुड़ के साथ मिलाकर खावे ॥ ४३ ॥

**गुल्मी कुमारिकामांसं कर्षार्द्धं गोघृतान्वितम्। गिलेद्व्योषाभयासिन्धुसूक्ष्मचूर्णावधूलितम् ॥**

*कुमारिका = 'घिवकुमारी' इति लोके ॥ ४४ ॥

गुल्मरोगी आधे तोले घृतकुमारी के गूदे को घी मिलाकर तथा ऊपर से सोंठ, मिर्च, पिप्पली, हरड़ तथा सेंधानमक इनके सूक्ष्म चूर्ण को बुरक कर सेवन करे। इससे गुल्म नष्ट हो जाता है॥

गुल्मरोगिण्याज्यपदार्थानाह—

**वल्लूरं मूलकं मत्स्यं शुष्कशाकानि वैदलम्। न खादेदालुकं गुल्मी मधुराणि फलानि च॥**
***वैदलानां निषेधेऽपि माषकुलत्थयोर्नात्र निषेध इति सुश्रुतटीका॥ ४५॥**

सूखा हुआ मांस, मूली, मछली, सूखे शाक, दाल वाले अन्न, आलू तथा मीठे फल इन सबको गुल्म रोगी न खाय।

दाल वाले अन्नों का गुल्म रोगी के लिये निषेध होने पर भी उड़द तथा कुलथी का निषेध नहीं है। ऐसा सुश्रुत की टीका में है॥ ४५॥

रक्तगुल्मचिकित्सामाह—

**स्निग्धस्विन्नशरीरस्य योज्यं स्नेहविरेचनम्। शताह्वाचिरविल्वत्वग्दारुभार्गीकणोद्भवः॥४६॥**
**कल्कः पीतो जयेद् गुल्मं तिलक्वाथेन रक्तजम्। तिलक्वाथो गुडव्योषघृतभार्गीयुतो भवेत्॥**
**योनिरक्तभवे गुल्मे नष्टपुष्पेषु योषिताम्। पीतो धात्रीरसो युक्तो मरिचैश्चास्रगुल्मनुत्॥४८॥**

सर्वप्रथम रक्तगुल्मी के शरीर का स्नेहन तथा स्वेदन करके स्नेहयुक्त ओषधियों द्वारा विरेचन, देना चाहिये।

शतावरी, करञ्ज की छाल, दारुहल्दी, भारङ्गी तथा पिप्पली इन ओषधियों के कल्क को तिल के क्वाथ के साथ पीने से रक्तज गुल्म नष्ट हो जाता है।

स्त्रियों के आर्त्तवनाश होने पर योनिरक्त से उत्पन्न गुल्म में तिल के क्वाथ को गुड़, सोंठ मिर्च, पिप्पली, घी तथा भारङ्गी को डालकर पिलाना चाहिये।

आंवले के स्वरस को मिर्च का चूर्ण डालकर पीने से रक्तगुल्म नष्ट होता है॥ ४६–४८॥

**गुण्डारोचनिकाचूर्णं शर्करामाक्षिकान्वितम्। विदधीताशु गुल्मिन्या मलसञ्चक्रमाय च॥**

रक्तगुल्म वाली स्त्री के दोषों को दूर करने के लिए गोरखमुण्डी तथा वंशलोचन के चूर्ण को मिश्री तथा मधु मिलाकर सेवन करावे॥ ४९॥

**विशेषमपरञ्चाशु शृणु रक्तप्रभेदनम्। पलाशक्षारतोयेन सर्पिः सिद्धं पिबेच्च सा॥ ५०॥**
**सक्षारं त्र्यूषणं सर्पिः प्रपिबेदस्रगुल्मिनी॥ ५१॥**

रक्तगुल्म को शीघ्र नष्ट करने वाले अन्य भी विशिष्ट योगों को कहते हैं, सुनियेः—पलाशक्षार के जल के साथ पकाये हुये घी को पीवे अथवा जवाखार, सोंठ, मिर्च तथा पिप्पली के चूर्ण को घी में मिलाकर रक्तगुल्मिनी को पिलाने से उसका गुल्म नष्ट हो जाता है॥ ५०–५१॥

**यस्मिन्न च रसक्षीरतोयसाध्यरसादिषु।**
**फेनोद्गारस्य निष्पत्तिर्नष्टदुग्धसमाकृतेः। स एव तस्य पाकस्य कालो नेतरलक्षणः॥ ५२॥**

**इति द्वात्रिंशो गुल्माधिकारः समाप्तः॥ ३२॥**

जिसमें 'रस, क्षीर, जल से साध्य घृतादिकों में विगड़े हुये दूध के समान फेन की उत्पत्ति जब न होने लगे तब उसके परिपाक का काल हुआ समझना चाहिये' इस परिभाषानुसार घृतपाक का काल समझना चाहिये॥ ५२॥

इति 'भावप्रकाश' भावप्रकाशकारिकायां 'विद्योतिनी' नामिकायां भाषाटीकायां-
मध्यखण्डे चिकित्साप्रकरणे द्वात्रिंशो गुल्माधिकारः समाप्तः॥ ३२॥

